VI. The various readings in Prâkṛita verses are indicated by Devanâgari numerical figures, and those in the commentary by English ones.

VII. The letters or words which the editor thought were omitted from the MSS. by the inattention of the scribes are supplied as suggestions in brackets.

VIII. Where in brackets following a Sûtra the letter हे० or है० is followed by two figures the first figure shows the number of the Chapter or Adhyâya and the second figure shows the number of the quarter or Pâda of Haima Vyâkaraṇa.

IX. In the foot notes to Kumârapâla, A means the Deccan College MS. of Haima Vyâkaraṇa consisting of chapter VIII.

---

# विषयानुक्रमः.



## सर्गः १



---

## सर्गः २

---

## सर्गः ३

---

## सर्गः ४

---

## सर्गः ९

---

## सर्गः ६

---

## सर्गः ७

### स्वापान्ते राज्ञः परमार्थचिन्ता १–८४.

# CORRECTIONS.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २ | ४ | जँउण-यडम् । जँउणा° | जउँण-यडम् । जउँणा° |
| १३ | ८ | °दाइ वा । | °दाई वा । |
| २१ | १२ | नूउँरं । | नूउँरं । |
| २६ | ८ | वैशिक | वेंशिक । |
| ३१ | ३ | जँउणा । चाँउण्डा । काँउओ । | जउँण । चाउँण्डा । काउँओ |
| ,, | ४ | अइमुन्तयं । | अइमुंतयं । |
| ३५ | २० | भवीत । | भवति । |
| ३८ | १० | ओसह । | ओसहं । |
| ४१ | १२ | वच्छस्स छाही | वच्छस्स च्छाही |
| ,, | १३ | वच्छस्स छाया । | वच्छस्स च्छाया । |
| ४४ | ११ | पा-वीढं ॥ पाय° | पा-वीढं पाय° |
| ५४ | १७ | वाप्पे | वाष्पे |
| ५५ | १५ | °ह्न ह्न | ह्न-ह्न° |
| ६० | २ | वहुत्तं । | वेहुत्तं । |
| ,, | २५ | Add | १ AB बहुत्तं । |
| ७२ | १४ | कट्टं । | कुट्टं । |
| ७३ | १९ | पुणरुत्त कृत° | पुणरुत्तं कृत° |
| ८३ | १४ | दाण जलो° | दाण-जलो° |
| ९३ | १४ | स्सि-म्मि° | स्सिं-म्मि° |
| ११० | ५ | क्वचिद् रे | क्वचिद् इरे |
| ११८ | २० | ऊर्ध्व | ऊर्ध्व |
| ,, | २७ | Add १२ P omits this verse. | |
| १२४ | २१ | रोमन्थे रो° | रोमन्थेरो° |
| १४१ | ११ | षड | षड् |
| १५१ | ७ | च्चिण्णिज्जइ । | चिणिज्जइ । |
| १६७ | ३ | भगव म° | भगवं म° |
| १८७ | ११ | सवधु | सबधु |
| ,, | १३ | ,, | ,, |
| १९९ | ११ | मक्कड्ड-घु° | मक्कड-घु° |
| ,, | १३ | वसि । | वीस । |
| २०५ | २ | ल्लुग | लुग् |

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Prof. A. V. Kâthavate and Prof. S. R. Bhândârkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. G. Bühler ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. F. Kielhorn. The Sanskrit Text and various Readings, Part I.... ... ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. G. Bühler... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn ... ... ... ... ... | 0 | 6 | 0 |
| No. V.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part I., Cantos I.—VI. ... ... | 1 | 8 | 0 |
| No. VI.—Mâlavikâgnimitra: Sanskrit Play by Kâlidâsa. Edited, with Notes by Shankar P. Pandit, M. A. ... ... ... ... ... ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part II., Cantos VII.—XIII. ... ... ... ... ... ... ... | 0 | 12 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX. ... ... ... ... ... ... | 0 | 8 | 0 |
| No. X.—The Das'akumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. G. Bühler... . . ... ... ... | 0 | 8 | 0 |
| No. XI.—The Nîtis'ataka and Vairâgyas'ataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M. A. (copies not available.) ... | | | |

No. XII.—Nâgojibhaṭṭa's Paribhâshendus'ekhara. Edited and explained by Dr. F. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ...

No. XIII.—The Raghuvaṁs'a of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M. A. Part III., Cantos XIV.—XIX ... ... ... ... ... ... ...

No. XIV.—Vikramâṅkadeva-Charita. Life of king Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler (copies not available.)

No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhâṇḍârkar, M. A. (Second Ed. in the Press.)... ... ... ... ... ... ...

No. XVI.—Vikramorvas'î: a Drama by Kâlidâsa. Edited with Notes, by Shankar P. Pandit, M. A. (New Edition in the Press.)... ... ... ...

No. XVII.—Hemachandra's Des'înâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler, Part I. Text and Critical Notes, by Professor Pischel. ... ... ... ... ...

No. XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete. Parts I, II & III. ... ... ... ... ... ...

No. XIX. Ditto ditto by ditto. Vol. I. Part II.

No. XX. Ditto ditto by ditto. Vol. I. Part III.

No. XXI. Ditto ditto by ditto. Vol. II. Part I.

No. XXII. Ditto ditto by ditto. Vol. II. Part II.

No. XXIII. Vâsishṭhadharmas'âstram. Edited, with Notes, by Dr. A. A. Führer ... ... ...

No. XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson. (New edition in the Press.) ... ...
Do. Vol. II. Introduction and Notes, by do. ...

No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kâthavaté. (copies not available.) ...

## सर्गः ८

श्रीः ॥

ओं नमः श्रीजिनेश्वरपादपद्मेभ्यः ॥

पुण्याङ्कूराः शिवसुखफलं श्रोतृजन्तून् नु नेतुं
तैरग्रेऽस्ताः किमुत लिखितुं मङ्गलान्यष्ट लाजाः ।
यस्योह्यन्ते सदसि दशनाभीशवो देशनायां
स श्रीचन्द्रप्रभजिनपतिः प्रातिभं नस्तनोतु ॥ १

अधोविहितदुर्गतिं प्रकटदिव्यगोत्रोद्गतिं
वृतं सुमनसां भरैः प्रियतरामृतोद्यत्फलम् ।
सुराजितशुभश्रियं भुवनसत्तमामोदकं
जिनेश्वरम् अभिष्टुवे गुरुम् अभीष्टकल्पद्रुमम् ॥ २

यत्पार्श्वे याचितुं किं किमपि शशिरवी कुण्डलद्वन्द्वदम्भाद्
भेत्तुं दारिद्र्यवृत्तेः स्तुतिम् अति युगपद् दीप्रचक्रे नु भातः ।
सद्वीणापुस्तमुक्ताक्षवलयकमलातुल्यहस्ताब्जलक्ष्मी-
र्वाग्देवी सा सुधाभा मम मनसि सदा स्तात् प्रकॢप्य प्रसादम् ॥ ३

यः प्राकृतव्याकरणं नु शब्दैः साहित्यसर्वस्वमिवार्थभङ्ग्या ।
स द्व्याश्रयः काव्यम् अनल्पबुद्धिज्ञेयः कथं मादृश एव गम्यः ४

अभीष्टकल्पद्रुगुरुप्रसादप्रादुर्भवत्प्रातिभवैभवोहम् ।
स्वान्याववोधाय तथापि किंचिद् यत्नं विधास्ये विवरीतुम् एनम् ५

इह हि सदिङ्नागनागपतिकूर्मकुलाचलाचलाभाराङ्गीकारव्यावृत्त-
दोर्दण्डकलिताकर्णाकृष्टकाण्डालिव्रप्रचण्डकोदण्डटङ्काराडम्बरत्रा-

सितदुर्धरवैरिवारबलस्य अगणितगुणगणतारतारकद्युतिद्योतितादिङ्म-ण्डलस्य प्रसरत्कीर्तिचन्द्रिकाधवलितनभस्तलस्य दीनानाथजन्तुजातविघातरक्षणक्षमबलस्य परोपकारकरणवर्णशीलस्य[1] नानाप्रकारभक्तिप्राग्भारवन्दारुचतुःसमुद्रवसुंधराधिपकोटाकोटिकिरीटकोटिकान्तिपिञ्जरितचरणयुगलस्य चौलुक्यवंशमुक्ताफलस्य परमार्हतश्रीकुमारपालभूपालस्य संस्कृतद्व्याश्रयप्रतिपादितावशेषं प्राकृतलक्ष्यै रुचिरं चरितं वक्तुकामः साहित्यव्याकरणाद्यनेकशास्त्रनिर्माणाप्रत्न[2]प्रजापतिः श्रीहेमचन्द्रयतिपतिः प्राकृतद्व्याश्रयं महाकाव्यं चकार ॥ अथ द्व्याश्रय इति कः शब्दार्थः । उच्यते । द्वयोः महाकाव्यलक्षणशब्दलक्षणयोराश्रयो द्व्याश्रयः । एवं तर्हि सर्वमहाकाव्यानां द्व्याश्रयत्वप्रसङ्गः । न हि तत्र क्वापि महाकाव्यलक्षणशब्दलक्षणे न स्तः । इति चेत् न । अत्र हि "यथापद्यं प्रायः" इत्यादि महाकाव्यलक्षणम् अस्ति । तथा व्याकरणाष्टमाध्यायोक्त-"अथ प्राकृतम्"-इत्यादिसर्वसूत्रानुक्रमन्यस्तमूलोदाहरणव्यावृत्त्युदाहरणप्रस्तावायातमतान्तरोदाहरणप्रतिपादनेन सकलं प्राकृतलक्षणमपि । न चैवम् अन्यत्रेति नातिप्रसङ्गः ॥

---

[1] B परोपकारणवणशीलस्य. C परोपकारकरणवणशीलस्य. [2] C °प्रयत्न°. We with B.

अर्हं ।

अह पाइआहिं[1] भासाहिं संसयं बहुलम् आरिसं तं-तं
अवहरमाणं सिरि-वद्धमाण-सामिं नमंसामो. १

अत्र च साधुसमाचारपरिपालनार्थं निर्विघ्नेन शास्त्रपरिसमाप्त्य-र्थम् आसन्नोपकारित्वाद् अभिमतदैवतस्य निखिलमङ्गलालयस्य श्री-वीरस्वामिनो ग्रन्थकारः अभिधेयप्रयोजनसूचकं नमस्कारम् आदौ आविश्चकार ॥

१. आदौ अथशब्दो मङ्गलार्थः अनन्तरार्थश्च । यद् अमरः । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इति । अथ संस्कृत-द्व्याश्रयानन्तरं प्राकृतद्व्याश्रयमहाकाव्यं चिकीर्षवो वयं श्रीवर्ध-मानस्वामिनं नमस्यामः । भगवति गर्भस्थिते ज्ञातिकुलं हास्तिकाश्वी-यरथकट्यापादातधनकनकमाणिक्यादिभिर्वर्धत इति वर्धमानः । श्रिया अष्टमहाप्रातीहार्यशोभया युक्तो वर्धमानः । स चासौ स्वामी च तं श्रीवर्धमानस्वामिनम् । अत्र च श्रीशब्देन पूजातिशयः प्रतिपादितः ॥ त्रिभुवनविभुं प्रति एकवचनम् आत्मानं प्रति तु बहु-वचनं विरुद्धमिति न वाच्यम् । यतः अयं निरुपमत्वाद् एकः । वयं च प्राकृतप्रायाः प्रभूता इति सूचनार्थम् एकत्वबहुत्वे स्तः ॥ किंभू-तम् । प्राकृतीभिर्भाषाभिः कृत्वा संशयं संदेहम् आर्षं प्रचुरच्छा-त्रपरिवृतेन्द्रभूत्यादिऋषिसंबन्धिनं तंतम् अतिशयप्रसिद्धं बहुलं जीवकर्मादिविषयत्वेन प्रभूतम् । यद् उक्तम् ।

[1] C पायआहिं.

जीवो कम्मे तज्जीव-भूअ-तारिसयं-बन्धमुक्खे य।[1]
देवा नेरइया वा पुन्ने परलोय-निव्वाणे ॥

अपहरमाणं विनाशयन्तम् । इत्यनेन वचनातिशय उक्तः । स च न ज्ञानातिशयं विनेति तेन ज्ञानातिशयाक्षेपः । सोपि न अपायापगमातिशयं विनेति तेनापि च अपायापगमातिशयाक्षेपः । अपायभूता रागादयः तेषाम् अपगमः । स एव अतिशयः । अथ वा । वर्ध च्छेदनपूरणयोः । चौरादिकत्वाण्णिचि[2] कृते वर्ध्यते छिद्यतेसाविति स्वरान्तत्वात् कर्मण्यल् । ततो वर्धः छिन्नः मानः अहंकारो येनेति व्युत्पत्त्या वर्धमान इति नाम्नैव सूचितः । इत्थं चतुस्त्रिंशदतिशयज्ञापकम् अतिशयचतुष्कम् उक्तम् । पाइआहिँ भासाहिँ इत्यत्र बहुवचनम् अशेषान्यभाषासंग्रहार्थम् । अत्र च संस्कृतद्व्याश्रयप्रतिपादितव्याकरणसप्ताध्यायीसकललक्ष्यतद्व्याश्रयवर्ण्यमानश्रीमूलराजनृपादिचरितरूपाभिधेयानुक्रमायातप्राकृताष्टमाध्यायोदाहरणश्रीकुमारपालभूपालचरित्रस्वरूपम् अभिधेयम् अथशब्देन सूच्यते । अनेन च अभिधेयेन सह अस्य महाकाव्यस्य प्रतिपाद्य[3]प्रतिपादकलक्षणः संबन्धः । प्रयोजनं च अनन्तरं सकलप्राकृतलक्षणश्रीकुमारपालचरितपरिज्ञानम् । परं परं च निःश्रेयसम् । यद् उक्तम् ।

व्याकरणात् पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति ।
अर्थात् तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः ॥ १

सुकृतं जनयत्यादावसुरसुरस्वामितां ततः क्रमशः ।
निर्वृतिवनितावाप्तिं धार्मिकगुणकीर्तनं विदुषाम् ॥ २

"अह पाइआहिँ" "बहुलं" "आरिसं" इति पदभणितिव्याजेन साक्षात् "अथ प्राकृतम्" [१.] "बहुलम्" [२.] "आर्षम्" [३.] इति सूत्रत्रयं प्रतिपादितम् । तच्च अग्रे यथालक्ष्यम् अत्र ग्रन्थे व्यक्तीभविष्यति ॥

---

1 B °तारिसत्रं°. C तारिसमयवं°. 2 B C °ण्णिति. 3 C omits प्रतिपाद्य°.

**अत्थि अणहिल्ल-नगरं, अन्ता-वेईसमाइ-निव-निचिअं,**
**सत्तावीसइ-मुत्तिअ-भूसिअ-जुवइ-जण-पइ-हरयं. २**
**तिअस-वई-हर-वहु-मुह-आदरिसीहूय-फलिह-सिल-सिहरो**
**जस्सिं पुहइ-वहू-मुह-अवयंसो सहइ पायारो ; ३**

२. अधुना श्रीकुमारपालस्य चरितं विवर्णयिषुः सकलैन्दिराम-न्दिरं तद्राजधानीनगरं वर्णयति । अन्तर्वेदिः गङ्गायमुनयोर्मध्य-देशः तस्य ईशः स आदिर्येषां ते च ते नृपाश्च तैर्निचितं व्याप्तम्। प्रतापपराभूतमार्तण्डमण्डलस्य श्रीकुमारपालभूपालस्य प्रसादनाय सकलदिङ्मण्डलमिलिताखिलनरपालचक्रवालेन सर्वकालम् अस्य क-लितत्वात् । सप्तविंशतिमौक्तिकाभिर्नक्षत्रमालानामहारविशेषैः भू-षितो युवतिजनो येषु एवंभूतानि पतिगृहाणि ईश्वरसदनानि यत्र तत् अणहिलनगरम् अस्तीति संबन्धः ॥ तत् पुनः कथम् अणहिलन-गरम् इत्यभिधीयते । अभिधीयते । पूर्वं किल वनराजराजेन नूतननगरविधानविहितचित्तेन प्रधानभूमिखण्डगवेषणार्थं विचरता एकदा अरण्यमध्ये गवादींश्चारयन् अणहिलो नाम गोपालो दृष्टः । तदग्रे च चित्ताभिप्रायो निवेदितः । तेनापि तत्कार्य-करणार्थं शकुनगवेषणं कुर्वता एकत्र प्रदेशे शृगालो बलिष्ठकुर्कुरं निर्धारयन्नवलोकितः । तत्रैव च अणहिलेन वनराजराजो नगर-निवेशं स्वनाम्ना कारित इति अणहिलनगरम् ॥

वेईसमाइ इत्यत्र वक्रादित्वाद् [१. २६] अनुस्वारः । बाहुलकत्वात् [१. २४] क्वचिद् अन्यस्यापि व्यञ्जनस्य मः ॥

३. अधुना षड्विंशतिगाथामानेन आदिमहाकुलकेन एतदेव नगरं यच्छब्देन निर्दिशन् वर्णयति । तृतीया दशा येषाम् । मयूरव्यंसकादित्वान्निपातः। तेषां पतिः इन्द्रः तस्य गृहं स्वर्गः तत्र या

निव-सह-मुहावयंसा विइया गुरुणो अवीय-गुण-निवहा
निवसन्ति अणेग-बुहा[१] जस्सिं पुहवीस-सलहिज्जे ; ४

न हु अत्थि नवि अ हूअं इह लोए अइसएण जस्स समं
सुउरिस-ठाणम्[२] असूरिस-रहिअं सालाहण-पुरंपि ; ५

वध्वस्तासां यानि मुखानि तेषाम् उन्नतत्वाद् उज्ज्वलत्वाच्च अनादर्शा[1] आदर्शाः[2] संपन्नानि आदर्शीभूतानि स्फटिकशिलाशिखराणि यस्य । पृथिव्येव वधूः सुखहेतुत्वात् तस्या मुखं सर्वनगरप्रधानत्वात् इदमेव नगरं वक्त्रम् तस्य अवतंसः शोभाकारित्वात् शेखरः इत्थंभूतः प्राकारः कोट्टो यत्र राजते ॥

अन्तावेईस । सत्तावीसइ-मुत्तिअ-भूसिअ । "दीर्घह्रस्वौ मिथो वृत्तौ" [४.] इति स्वराणां समासे दीर्घह्रस्वौ । क्वचिन्न । जुवइ-जण । क्वचिद् वा । पइ-हरयं वई-हर । दीर्घस्य ह्रस्वः । सिल-सिहरो । क्वचिद् वा । वहु-मुह वहू-मुह ॥

४. नृपस्य सभाया रम्यत्वात् मुखस्य अन्यथानुपपत्तेश्च कान्तात्वम् । सा तस्या मुखम् तत्र अवतंसाः शोभाकृत्त्वेन आपीडा इव । किल गगनाङ्गणगत एक एव गुरुः प्रसिद्धः । परम् एते विशदप्रज्ञर्द्धितः उत्प्रेक्ष्यन्ते द्वितीया गुरवः । अविद्यमानो द्वितीयः उपमानतया यस्य सः अद्वितीयो निरुपमः । एवंभूतो गुणनिवहो येषाम् । न एकः अनेके[3] अनेके च[3] ते बुधाश्च ते तथा । पृथिवीशैरन्यनगरापेक्षया श्लाघ्ये प्रशंस्ये यस्मिन् निवसन्ति ॥

मुह-अवयंसो मुहावयंसा । "पदयोः संधिर्वा" [५.] इति संस्कृतोक्तः सर्वैः[4] संधिर्वा । पदयोरिति किम् । सहइ । बहुलाधिकारात् क्वचिद् एकपदेपि । विइया अवीय ॥

५. सकलनगरतिलककल्पं किल सातवाहनस्य राज्ञो नगरं प्र-

---

१ B C °वुहा for °बुहा. २ B सुयरिस° wrongly. C सउरिस°.

---

1 C उज्जलत्वाच्चानादर्शा, and B उज्जलत्वाद्वानादर्शा for उज्ज्वलत्वाच्च अनादर्शा.
2 B आदर्शांसं°. C आदर्शसं°. 3 B C अनेक: अनेकश्च. 4 C om. सर्वैः.

**जस्सिं नमन्त-सीसो तियसीसोवि हु तवं तवन्ताण**
**तेलुक्क-सज्जणाणं थुणइ स-भिक्खूण सद्धाए ; ६**
**जत्थोन्नय-थण-नीसह-वहु-दंसण-निस्सहं नरा जन्ति,**
**दुसहाउ दुस्सहेणं मयणेण हयन्तरप्पाणो ; ७**

तिष्ठानं नाम । यतः सुपुरुषाणां सदाचारनराणां स्थानं पदम्। असुपुरुषैः नीचैश्च रहितं विवर्जितम् । परं तदपि न खलु अस्ति नापि च आसीत् इह लोके अस्मिन् जगति अतिशयेन माहात्म्येन कृत्वा यस्य समं तुल्यम् । एतदनुमानेन अग्रेपि अनेन समं तन्न भावीति विज्ञायते ॥

निवसन्ति अणेग । हु अत्थि । "न युवर्णस्यास्वे" [६.] इति न संधिः । अस्व इति किम् । पुहवीस । युवर्णस्येति किम् । गुरुणो अत्रीय ॥

लोए अइसएण । "एदोतोः स्वरे" [७.] इति न संधिश्च । एदोतोरिति किम् । पुहवीस ॥

°वि अ । हूअं । लोए । अइसएण । रहिअं । "स्वरस्योद्वृत्ते" [८.] इति न संधिः । बाहुलकत्वात् क्वचिद् वा । सुउरिस असुरिस । क्वचित् संधिरेव । सालाहणो ॥

निवसन्ति अणेग । "त्यादेः" [९.] इति न संधिः ॥

६. यस्मिन् बाह्याभ्यन्तरभेदेन द्वादशप्रकारं तपः तप्यमानानां चरतां त्रयो लोकास्त्रैलोक्यम् । भेषजादित्वाद् यण् । ऊर्ध्वाधोमर्त्यलोकलक्षणम् । तात्स्थ्यात् प्राणिचयोपि । तस्य परिपालनादिभिः कृत्वा सज्जना बान्धवास्तेषां सद्भिक्षूणां प्रधानमुनीनां श्रद्धया अन्तरङ्गबहुमानेन आस्तां सुरासुरखचरनरनिकरः त्रिदशेशोपि । हु इति निश्चितम् । नमच्छीर्षः स्तौति ॥

तियसीसो । "लुक्" [१०.] इति लुक् ॥

तवं । "अन्त्यव्यञ्जनस्य" [११.] इति लुक् । वाक्यविभक्त्यपेक्षायां हि अन्त्यत्वम् अनन्त्यत्वं च । तेन उभयम् । सज्जणाणं सभिक्खूण ॥

७. दुःसहात् असह्यशीतातपादेरपि दुःसहेन असह्येन मदनेन

तेअ-दुरालोएहिं अन्तो-उवरिं घराण रयणेहिं
छूढव्व[1] निरवसेसा सरिआहिव-संपया जत्थ ; ८
विज्जु-चलं महुर-गिरो दिन्तो लच्छि जणो छुहत्ताण
भिसओ खु, जहा सरओ दिसाण पाउस-किलन्ताण ; ९

हृतान्तरात्मानस्तिरस्कृतान्तःसत्त्वाः उन्नतस्तनैर्निःसहा गमनागमनादिकार्ये मन्दा या वध्वस्तासां दर्शनेन संजातरणरणकत्वाद् निःसहम् अधीरं यथा भवति एवं नरा भोगिनो यत्र यन्ति यान्ति वेति ॥

सड्ढाए । उन्नय । "न श्रदुदोः" [१२.] इति न लुक् ॥

नीसह निस्सहं । दुसहाउ दुस्सहेणं । "निर्दुरोर्वा" [१३.] इति वा न लुक् ॥

८. गृहाणाम् अन्तः मध्यप्रदेशे उपरि उपरितनभागे च तेजोदुरालोकैः प्रेङ्खत्प्रभामण्डलखण्डितनेत्रप्रसरै रत्नैः मुक्ताफलप्रवालाद्यैः कृत्वा सरिदधिपसंपदो रत्नाकरविभूतयः निरवशेषाः समस्ताः क्षिप्ता विन्यस्ता यत्र मन्यन्ते ॥

अन्तरप्पाणो । दुरालोएहिं । निरवसेसा । "स्वरेन्तरश्च" [१४.] इति लुक् न । क्वचिद् भवत्यपि । अन्तो-उवरिं ॥

९. मधुरगीः प्रियवाक्यः सन् जनः क्षुधार्तेभ्यो बुभुक्षाक्षामकुक्षिभ्यः विद्युच्चलां क्षणदृश्यविनश्वरीम् अतो ददत् कारुण्यात् प्रयच्छन् लक्ष्मीम् स्वास्थ्यजनकत्वेन संभाव्यते भिषग् वैद्यः । यत्रेति प्रक्रमाज्ज्ञेयम् । अत्रार्थे पूर्णोपमाम् आह । यथा शरत्कालः प्रावृट्क्लान्तानां वर्षाकालकलुषितानां दिशां लक्ष्मीं प्रसादरूपां शोभां ददाति ॥

सरिआ । "स्त्रियाम् आद् अविद्युतः" [१५.] इति आत्वम् । बाहुलकाद् ईषत्स्पृष्टतरयश्रुतिरपि । संपया । अविद्युत इति किम् । विज्जु-चलं ॥

महुर-गिरो । "रो रा" [१६.] इति राः ॥

छुहत्ताण । "क्षुधो हा" [१७.] इति हा । आर्षे तु[2] खुहेत्यपि ॥

१ B doubtful between बू° and छू°. C बूढव्व.

1 So B C. 2 B C आर्षेति for आर्षे तु.

जत्थच्छरस-मण-हरो वहूहि रमिरोवि अच्छर-समाहिं
दीहाऊवि अदीहाउस-माणी सइ विवेइ-जणो ; १०
कुसुम-धणू धणुह-धरो कउहा-मुह-मण्डणम्मि चन्दंमि
रज्जं तम् एगॅ-छत्तं असंकम् उवभुंजए जत्थ ;

भिसओ । सरओ । "शरदादेरत्" [ १८. ] इति अन्त्यव्यञ्जनस्य अत् ॥

दिसाण । पाउस । "दिक्प्रावृषोः सः" [ १९. ] ॥

१०. यत्र अप्सरोमनोहरः त्रिदशाङ्गनामानसावर्जकः अप्सरःसमाभिः देवीकल्पाभिर्वधूभिः कान्ताभिः सह रन्तापि रमणशीलोपि दीर्घायुरपि परिपूर्णजीवितव्योपि "मूलविस°"– इत्यादिसुगुरूपदेशवशप्रादुर्भूतानित्यत्ववासनावासिता[1]न्तःकरणत्वेन अदीर्घायुषम् आत्मानं मन्यते सदा विवेकिजनः युक्तायुक्तविमर्शकृल्लोकः ॥

अच्छरस । अच्छर । दीहाऊ । अदीहाउस । "आयुरप्सरसोर्वा" [ २०. ] इति सः ॥

११. ककुम्मुखमण्डने चञ्चत्किरणनिकुरुम्बप्रकृतदिक्कान्तावदनविलेपने चन्द्रे कुसुमधनुः पुष्पधन्वा राज्यम् आधिपत्यं तत् सर्वलोकप्रसिद्धं सर्वोत्कृष्टं वा एकच्छत्रम् अद्वितीयातपत्रम् अशङ्कं निर्भयं यत्र उपभुनक्ति पालयति । तदा तदाज्ञोल्लङ्घनासमर्थत्वाज्जगत इति ॥

कउहा । "ककुभो हः" [ २१. ] इति हः ॥

धणू । धणुह । "धनुषो वा" [ २२. ] इति वा हः ॥

रज्जं । "मोनुस्वारः" [ २३. ] इति मस्य अनुस्वारः । क्वचिद् अनन्त्यस्यापि । चन्दंमि ॥

छत्तं असंकमुव । "वा स्वरे मश्च" [ २४. ] इति वा अनुस्वारः । पक्षे लुगपवादो मस्य मः । बाहुलकाद् अन्यस्यापि व्यञ्जनस्य मः । तमेग ॥

---

[1] C omits °वासिता°.

2

रोमंच-कंटइल्लो संज्झाए वंक-जंपण-बइल्लो,
जत्थ मणंसिल-तिलओ विलसइ अहिसारिआ-लोओ ; १२
जत्थ भवणाण अवरिं देवं-नागेहिँ विम्हया दिट्ठो,
रमइ मणोसिल-गोरो मणासिल-लित्तो मयच्छि-जणो ;
पव्वेसु अपव्वेसुं जत्थ मुणीणं कमेण अकमेणं
काऊणं पडिवत्तिं हरिसं काऊण देइ जणो ; १४

१२. अभिसरति अभिसारयति वा कामार्ता कान्तम् इत्यभिसारिका। तल्लक्षणो लोकः अभिसारिकालोकः मनःशिलातिलकः वक्रजल्पने छेकः भाषितेतरवाच्यवचनरचनायां निपुणः अत एव रोमाञ्चेन कण्टकवान् संध्यायां यत्र विलसति क्रीडति। तथाविधजल्पनविलसनयोः अन्यथानुपपत्तितः कामिभिरिति अनुक्तमपि ज्ञेयम्॥

असंक। उवभुंजए। रोमंच। कंटइल्लो। संज्झाए। "ङ्ञणनो व्यञ्जने" [२५.] इत्यनुस्वारः॥

१३. देवनागैः अमरनागकुमारैः कथमत्र मानुष्यः अप्सरोभ्यो नागाङ्गनाभ्यश्च अधिकागण्यलावण्यशालिन्यो दृश्यन्त इति विस्मयात् आश्चर्याद् दृष्टः गगनाङ्गणे कस्यचित् कार्यस्य संसिद्धये विचरद्भिः अवलोकितः मनःशिलावद्गौरः। सुवर्णवर्णत्वात्। मनःशिलालिप्तः अङ्गशोभातिरेकहेतुतिलकादिकरणेन। मृगाक्षिणी इव अक्षिणी यासां ताश्च जनश्च भवनानाम् उपरि यत्र रमते। कामिभिरिति शेषः॥

वंक जंपण इति आद्यस्य मणंसिल इति द्वितीयस्य अवरिं इति तृतीयस्य "वक्रादावन्तः" [२६.] इत्यन्तोनुस्वारः। क्वचिच्छन्दःपूरणेपि। देवं-नागेहिँ। क्वचिन्न। मणासिल। आर्षे मणोसिल॥

१४. पर्वसु उत्तरपारणपारणादिरूपेषु अपर्वसु तद्व्यतिरिक्तान्यदिनेषु क्रमेण प्रथमम् एकस्य पश्चाद् द्वितीयस्येत्यादिपरिपाट्या

वीस-गुणो तीस-गुणो कलि-कालो नूण जत्थ कय-जुगओ,
नूणं अणभुञ्जन्ते लोए मासं स-मंसंव; १५
जस्सिं सकलंकंवि हु रयणी-रमणं कुणन्ति अकलङ्कं
सङ्खधर-संख-भङ्गोज्जलाओ भवणंसु-भंगीओ;
लङ्घिज्जइ नालंघं, वञ्चिज्जइ न हु अवंचणिज्जं च,
वञ्छिज्जइ नवि जस्सिं अवंछणिज्जं च केणावि; १७

अक्रमेण समकालं प्रतिपत्तिम् "अभिमुह-गमणम्" इत्यादिसिद्धान्तोक्तभक्तिं कृत्वा हर्षं कृत्वा च मुनीनां यत्र जनो ददाति ॥

भवणाण । पव्वेसु अपव्वेसुं । मुणीणं । कमेण अकमेणं । काऊणं काऊण । "त्त्कास्यादेर्णस्वोर्वा" [ २७. ] इत्यन्तो वानुस्वारः ॥

१५. किल अयं कलिकालः सर्वकालं सर्वकालेषु अधमतमः । परं सोपि सदाचारधार्मिकजनवत्त्वेन कृतयुगाद् विंशतिगुणस्त्रिंशद्गुणश्च यत्र । नूनम् इत्युत्प्रेक्ष्यते । नूनं निश्चितं मांसं स्वमांसवत् अभुञ्जाने अनश्नति लोके नरपत्यादौ सति । कृतयुगेपि हि केषांचित् पापात्मनां मांसाशित्वाद् अत्र च सर्वथा तदभावात् ततोधिकत्वम् ॥

वीस । तीस । "विंशत्यादेर्लुक्" [ २८. ] इति अनुस्वारलुक् ॥

मासं मंसं । नूण नूणं । "मांसादेर्वा" [ २९. ] इति अनुस्वारलुक् ॥

१६. यस्मिन् शङ्खधरशङ्खभङ्गोज्ज्वलाः चक्रधरपाञ्चजन्यच्छेदविशदा भवनांशुभङ्ग्यः सदनकिरणविच्छित्तयो रजनीरमणं चन्द्रम् । अपिर्विस्मये । सकलङ्कमपि समलमपि । हु इति निश्चितम् । अकलङ्कं निर्मलं कुर्वन्ति ॥

१७. अलङ्घ्यम् अनवज्ञेयं पूज्यं गुरुमातरपितरादिकं न लङ्घ्यते । तदाज्ञातिक्रमेण न पराभूयते । न च खलु अवञ्चनी-

**वंजिअ-सत्ती, सत्ती-अणञ्जिओ, सत्ति-वंज्झ-जण-वञ्झो,**
**लुंटाय-लुण्टणो, संठे सण्ठो जत्थ निव-लोओ ; १८**
**उद्दंड-बाहु-दण्डा जस्सिं कुंठासहा सयम् अकुण्ठा**
**कंतंगा कन्त-गुणा नय-पंथे पन्थिआ पुरिसा ; १९**

यम् अविप्रतार्यं मित्रादि वञ्च्यते विप्रतार्यते । नापि च अवाञ्छनीयम् अनभिलषणीयं परद्रव्यपरदारादि वाञ्छ्यते अभिलष्यते सदाचारनिरतत्वात् केनापि यस्मिन् ॥

१८. व्यञ्जिता प्रोद्धुरकन्धररणकण्डूलदोर्दण्डप्रचण्डशात्रवत्रासने शक्तिः स्वसामर्थ्यं येन । शक्त्या अनञ्जितः अगतशक्तिः । शक्तिवन्ध्यजनवन्ध्यः । पराक्रमवति अभियुक्तः । लुण्टाके चोरे लुण्टनो मोषकः । शठे मायाविनि शठश्छद्मपरः । नीतिमतां हि राज्ञां तथाविधेषु प्रतिकूलाचरणं न दोषाय । यद् आह भारविः ।

> व्रजन्ति ते मूढधियः पराभवं
> भवन्ति मायाविषु ये न मायिनः ।
> प्रविश्य हि घ्नन्ति शठास्तथाविधान्
> असंवृताङ्गान् निशिता इवेषवः ॥

यत्र नृपलोको राजानः ॥

१९. उद्दण्डौ शात्रवत्रासकृत्त्वेन प्रचण्डौ बाहुदण्डौ येषाम् । कुण्ठाः क्रियासु मन्दाः तान् न सहन्ते न क्षमन्ते इति कुण्ठासहाः । स्वयम् आत्मना च अकुण्ठाः देवार्चनादिक्रियासु अमन्दाः । कान्ताङ्गाः मनोज्ञहस्तपादाद्यवयवाः । कान्ता मनोज्ञा विश्वेन[1] वाञ्छिता वा गुणाः शौर्यौदार्यस्थैर्यगाम्भीर्यादयो येषाम् । नयपथे न्यायमार्गे पान्थाः पथिकाः पुरुषा यत्र ॥

---

1 B C विश्वविश्वेन.

चंदुज्जाणव चन्दो वंफिअ-बंधूण बन्धवो जस्सि

अणुकंप-कम्पिअ-मणो विहवि-जणो वम्फए धम्मं ; २०

लंबंत-लुम्बि-रंभारम्भिय-तोरण-निरुद्ध-संरंभो,

सरएवि पाउसम्मिव न जत्थ दीसइ फुडो तरणी ;

जत्थ चुलुक्क-निवाणं परिमल-जम्मो जसो, कुसुम-दामं,

नहम् इव सव्व-गओ, दिस-रमणीण सिराईं सुरहेइ ; २२

२०. चंदुज्जेति देश्यः कुमुदवाची । ततो यथा कुमुदानां चन्द्रो बान्धवः एवं काङ्क्षिता निराश्रयत्वेन अभिलषिता बान्धवा यैस्तेषाम् उपकारकारित्वाद् अनुकम्पाकम्पितमना दयावशगतचेताः सन् बान्धवः विभविजनः ईश्वरलोको यस्मिन् धर्मं काङ्क्षति ॥

२१. लम्बमाना लुम्ब्यः फलसमूहा यासु ताश्च ता रम्भाश्च कदल्यस्ताभिः आरब्धानि प्रतिगृहं कृतानि यानि तोरणानि वन्दनमालास्तैर्निरुद्धः निषिद्धः संरम्भः किरणनिकरप्रसररूप आटोपो यस्य स एवंभूतस्तरणिर्द्युमणिः स्फुटः प्रकटो न यत्र दृश्यते प्रावृषीव प्रावृट्काल इव शरद्यपि शरत्कालेपि । प्रावृषि हि सजलजलधरान्तर्हितत्वाद् न दृश्यते । अत्र तु निवृत्तघनायां शरद्यपि न दृश्यत इति विरुद्धार्थः अपिशब्दः ॥

सकलंकं अकलङ्कं । सङ्ग संख । भङ्गो भंगीओ । लङ्घिज्जइ लंघं । वञ्चिज्जइ अवंचणिज्जं । वाञ्छिज्जइ अवंछणिज्जं । वंजिअ अणञ्जिओ । वंज्झ वञ्ज्झो । लुंटाय लुण्टणो । संठे सण्ठो । उद्दंड दण्डा । कुंदा अकुण्दा । कंतंगा कन्त । पंथे पन्थिआ । चंदुज्जाण चन्दो । बंधूण बन्धवो । अणुकंप कम्पिअ । [वंफिअ] वम्फए । लंबंत लुम्बि । रंभा रम्भिअ । "वर्गेन्त्यो वा" [३०.] इति वा अनुस्वारस्य वर्गान्त्यः ॥

सरए । पाउसम्मि । तरणी । "प्रावृट्शरत्तरणयः पुंसि" [३१.] इति पुंलिङ्गे प्रयोक्तव्याः ॥

२२. यत्र चौलुक्यनृपाणां मूलराजप्रभृतीनां नभ इव गगनमिव

B C add वंफिअ before बंधूण instead of before वम्फए.

सव्व-वयाणं मज्झिम-वयंव, सुमणाण जाइ-सुमणंव,
सम्माण मुत्ति-सम्मंव, पुहइ-नयराण जं सेयं ; २३

चम्मं जाण न अच्छी, णाणं अच्छीइँ, ताणवि मुणीण
विअसन्ति जत्थ नयणा; किं पुण अन्नाण नयणाइं ?

गुरुणो वयणा वयणाइँ ताव, माहप्पम् अवि य माहप्पो
ताव, गुणाइंपि गुणा, जाव न जस्सि बुहे निअइ ; २५

सर्वगतम् ऊर्ध्वाधोमर्त्यलोकप्राप्तं परिमलस्य सौरभ्यस्य जन्म उत्पत्तिस्थानं यशः कुसुमदाम पुष्पमाल्यं दिग्रमणीनां शिरांसि सुरभयति सुरभीणि करोति। एतन्नगरम् आरभ्य सकलदिक्चक्रवालव्यापि चौलुक्यनृपाणां यश इत्यर्थः ॥

२३. यथा सर्ववयसां कौमारयौवनवार्धकानां मध्यमवयः पुण्यं श्रेयः। यथा सुमनसां बकुलविचकिलपाटलादिपुष्पाणां जातिसुमनाः। यथा शर्मणां चक्रवर्तिदेवेन्द्रादिसौख्यानां मुक्तिशर्म तथा पृथिवीनगराणां प्रतिष्ठानादीनां मध्ये यत् श्रेयः प्रशस्यतरम् ॥

२४. येषाम् अक्षीणि न चर्म किं तु ज्ञानं तत्त्वावबोधरूपम् अक्षीणि। तेषामपि मुनीनां सातिशयज्ञानिनाम् ऋषीणां यत्र नयनानि विकसन्ति अत्यद्भुतधर्मधर्मस्थानादिवीक्षणात् प्रीयन्ते। किं पुनरन्येषां चर्मचक्षुषां सामान्यजनानां नयनानि सविकासानीति ॥

जम्मो। जसो। "स्नम् अदामशिरोनभः" [३२.] इति पुंस्त्वम्। अदामशिरोनभ इति किम्। दामं। नहं। सिराइँ। बाहुलकात्। वयं। सुमणं। सम्मं। सेयं। चम्मं ॥

२५. गुरोः सुराचार्यस्य वचनानि तावद् वचनानि। आश्चर्यकारीणीत्यर्थः। माहात्म्यं गौरवमपि तावद् माहात्म्यम् गुणा बुद्धिमत्त्वादयोपि तावद् गुणाः यावत् न यस्मिन् बुधान् पश्यति।

हरि-हर-विहिणो देवा जत्थन्नाइँवि वसन्ति देवाइं;
एयाए महिमाए हरिओ महिमा सुर-पुरीए. २६
जत्थञ्जलिणा कणयं, रयणाइँवि अञ्जलीइ देइ जणो,
कणय-निही अक्खीणो रयण-निही अक्खया तहवि.
तॅत्थ सिरि-कुमार-वालो बाहाए सव्वओवि धरिअ-धरो
सुपरिट्ठ-परीवारो सुपइट्ठो आसि राइन्दो. २८

एतन्नगरबुधविलोकने तु बृहस्पतेर्वाग्मित्वं माहात्म्यं गुणाश्च न प्रतिभान्तीति भावः ॥

अच्छी अच्छीइँ । नयणा नयणाइं । वयणा वयणाइँ । माहप्पं माहप्पो । "वाक्यर्थवचनाद्याः" [ ३३. ] इति वा पुंस्त्वम् ॥

२६. हरिहरविधयो देवाः अन्येपि सूर्यसुगतफणिपत्यादयो देवा यत्र वसन्ति । अनेन माहिम्ना सुरपुर्याः स्वर्गलोकस्य महिमा प्रभावः हृतस्तिरस्कृतः । सुरपुर्यां हि इन्द्र एव एकः प्रवरो वसति । अत्र महाप्रभावाण्यनेकानि देवतानि । अतो युक्तस्तन्माहिमापहारः ॥

गुणाइं गुणा । देवा देवाइं । "गुणाद्याः क्लीबे वा" [३४.] इति वा क्लीबत्वम् ॥

२७. यत्र कनकम् अञ्जलिना हस्तेन रत्नान्यपि पद्मरागगारुत्मतहीरकमौक्तिकादीन्यपि अञ्जलिना यत्र जनो ददाति । कृपापात्रदीनानाथाद्यर्थिषु इति शेषः । तथापि कनकनिधिः सुवर्णशेवधिः अक्षीणः परिपूर्णः । रत्ननिधिश्च अक्षीणः । प्रतियाचकं तथा दाने शेवधीनां ह्रासः संभवति । परं वैश्रवणकल्पत्वाज्जनानां तत्परिपूर्णतैवेत्यर्थः । आदिमहाकुलकम् ॥

महिमाए महिमा । अञ्जलिणा अञ्जलीइ । निही निही । "वेमाञ्जल्याद्याः स्त्रियाम्" [ ३५. ] इति स्त्रीत्वम् ॥

२८. सर्वतः सकलदिग्वलयावनिपालेभ्यो दिग्गजकूर्मकुलाचल-

**तुह आणा-ओमालं सिरम्मि धरिमो, जहा अणिम्मल्लं,**
**अम्हे एत्थाम्हेत्थ य इअ भणिउं, जो निवेहि नओ ; २९**
**तुह हरि-पिआ जइ इमा किंपि पिआ, किम् अवि मेइणी जइमा,**
**ता किंत्ति मएत्ति रुसेव जस्स कित्ती गया दूरं ; ३०**

फणिपतिभ्यो वा बाहौ स्वदोर्दण्डे धृतधरः संस्थापितवसुंधरः सुप्रतिष्ठः सन्न्यायमार्गस्थितः परीवारो मित्रामात्यादिवर्गो यस्य। सुप्रतिष्ठः प्रतिज्ञाशूरः तत्र अणहिलनगरे श्रीकुमारपालो राजेन्द्र आस्ते॥

बाहाए । "बाहोरात्" [३६.] इत्याकारोन्तादेशः ॥

वालो । सव्वओ । धरो । वारो । सुपइट्ठो । राइन्दो । "अतो डो विसर्गस्य" [३७.] इति विसर्गस्थाने डोः ॥

२९. अधुना एकान्नविंशत्या गाथाभिः अस्यैव राज्ञो वर्णनम् आह। तव आज्ञैव शासनमेव निर्माल्यं शेषां शिरसि शीर्षे धरामः वहामः । किमिव । यथा अनिर्माल्यं तत्कालविकसितशतपत्रिकाचम्पकादि दाम । अत्र सिन्धुदेशादौ वयम् अत्र कुङ्कुणदेशादौ च वयं वर्तामहे इति भणित्वा यो नृपैर्नतः ॥

सुपरिट्ठ सुपइट्ठो । ओमालं अणिम्मल्लं । "निष्प्रती ओत्परी माल्यस्थोर्वा" [३८.] निर्प्रती माल्ये स्थाधातौ च यथासंख्यम् ओत्परी वा ॥

३०. तव इयं हरेः प्रिया भार्या यदि किमपि अनाख्येयं यथा भवति एवं प्रिया मेदिनी च चाण्डाली इयं यदि किमपि प्रिया तदा किमिति किम् एवं सति मयेति अस्माद्धेतो रुषेव यस्य कीर्तिर्गता दूरम् ॥ कान्ता हि यदा नीचान्यकान्तासक्तं भर्तारम् अवलोकयति तदा रोषाद् अन्यत्र व्रजति। कीर्तेरपि तथा सर्वत्र भ्रमणाद् इत्थम् उत्प्रेक्षा। अत्र च हरिप्रिया लक्ष्मीः मेदिनी पृथ्वी ॥

"आदेः" [३९.] । आदेरित्यधिकारः कगचजेत्यादिसूत्रात् प्राग अविशेषे वेदितव्यः ॥

अम्हे एत्थ अम्हेत्थ । जइ इमा जइमा । "त्यदाद्य०" इत्यादिना [४०.] त्यदादेरव्ययाच्च तयोरेवादेः स्वरस्य बहुलं लुक् ॥

जो दूसासण-रिउणो आसत्थामस्स राम-सीसस्स
वीसामिअ-जस-पसरो स-जसेणं कासवि-तलम्मि; ३१

वीसुं वासा-नीसित्त-महि-अले ऊस-मालि-तेअस्स
रज्जे जस्स न कासवि नीसत्तं नीसहत्तं वा; ३२

गुण-सामिद्धी पयडा, कला-समिद्धीवि पायडा जस्स,
जो दाहिण-पवण-निहो दक्खिण्ण-निही गुणि-वणाण; ३३

किंपि किमवि। "पदाद् अपेर्वा" [ ४१. ]। पदात् परस्य अपेः आदेर्लुग् वा ॥

किंति । मणत्ति । "इतेः स्वरात् तश्च द्विः" [ ४२. ] इति पदाद् इतेः आदेर्लुक् स्वराच्च तकारो द्विः ॥

३१. दुःशासनस्य रिपुर्भीमस्तस्य । अश्वत्थाम्नः द्रोणाचार्याङ्गजस्य। रामस्य परशुरामस्य शिष्यो भीष्मस्तस्य च विश्रमितयशःप्रसरः प्रशमितसुश्लोकप्रपञ्चः स्वयशसा कृत्वा यः काश्यपीतले पृथ्वीपीठे । भीमादीनां शौर्यादिगुणगणेभ्योपि अद्भुतगुणत्वाद् अस्य सुघटस्तद्यशःप्रशमः। अथ च चिरभ्रमणखिन्नं विश्राम्यते ॥

३२. उस्रमालितेजसः दुःसहत्वाद् मार्तण्डकल्पप्रतापस्य यस्य विष्वक् समन्ताद् वर्षासु प्रावृट्काले निषिक्तं धाराधरधाराधोरण्या उक्षितं महीतलं यत्र तस्मिन् राज्ये न कस्यापि निःसत्त्वं निर्द्रव्यत्वं निःसहत्वम् असमर्थत्वं वा। राजन्वत्यां हि पृथ्व्यां स्वकाले वृष्टिः ईश्वराः समर्थाश्च लोका इत्यादि सर्वं सुघटमिति ॥

दूसासण । आसत्थामस्स । सीसस्स । वीसामिअ । कासवि । वीसुं । वासा । नीसित्त । ऊस । कास । नीसत्तं । नीसहत्तं । "लुप्तयरव०" इत्यादिना [ ४३. ] लुप्तयाद्यानां शषसानाम् आदेः स्वरस्य दीर्घः ॥

३३. गुणानां शौर्यादीनां समृद्धिः संपत् प्रकटा अत्युत्कर्षप्राप्तत्वात् प्रसिद्धा । कलानां गीतपठितादिद्विसप्ततिसंख्यानां समृ-

सिविणम्मि वारण-बलं सुमिणम्मि अ आस-साहणं जस्स
दिण्ण-भयं पिच्छन्ता दत्त-करा रिउ-निवा जाया; ३४
अङ्गार-पिक्क-गोल्ले खाए इङ्गाल-पक्क-कन्दे अ
तत्त-निलाडा रिउणो जस्स णलाडं-तवे तवणे; ३५

द्भिरपि यस्य प्रकटा । दाक्षिण्यस्य अनुकूलताया निधिः शेवधिः । गुणिनः सन्तः त एव सर्वसाधारणत्वेन वनानि । तेषां फलसमृद्ध्यादिजनकत्वेन दक्षिणपवननिभो योस्ति ॥

सामिद्धी समिद्धी । पयडा पायडा । "अतः समृद्ध्यादौ वा" [४४.] इति आदेरस्य दीर्घो वा ॥

दाहिण । "दक्षिणे हे" [४५.] इति आदेरस्य दीर्घः । हे इति कि[illegible]। दक्खिणं ॥

३४. स्वप्ने वारणबलं गजसैन्यं स्वप्ने अश्वसाधनं [illegible]टकं च दत्तभयं वितीर्णत्रासं यस्य प्रेक्षमाणा दत्तकरा अर्पितदण्डा रिपुनृपा जाताः । तद्गजादिबलं चरेभ्यः सभयं निशम्य स्वप्ने साक्षादिव पश्यन्तस्त्रस्तचित्ता रिपुनृपाः स्वसौख्याय यं दण्डादिना प्रसादयन्तीति भावः ॥

सिविणम्मि । दिण्ण । "इः स्वप्नादौ" [४६.] इति इत्वम् । आर्षे उकारोपि । सुमिणम्मि । बाहुलकाण्णत्वाभावे न । दत्त ॥

३५. ललाटंतपे अत्युग्रे तपने मार्तण्डे सति तप्तललाटाः संतप्तभालस्थला रिपवो यस्य अङ्गारपक्कानि यानि गोल्लेति देश्यत्वाद् बिम्बीफलानि तानि । अङ्गारेषु पक्का ये कन्दास्तांश्च खादन्ति भक्षयन्ति । यद्भयाद् अरण्यानीमध्यम् अध्यासीना अङ्गारपक्कबिम्बीफलकन्दादिभिः शत्रवः प्राणधारणां कुर्वन्तीत्यर्थः ॥

अङ्गार इङ्गाल । पिक्क पक्क । निलाड णलाडं । "पक्काङ्गारललाटे वा" [४७.] इति वा इत्वम् ॥

कइमं मज्झिम-लोए रिऊहिँ चत्तं न छत्तिवण्ण-वणं,
नव-छत्तवण्ण-परिमल-मए गए जस्स संभरिउं? ३६
अमयमइओव्व अहवा अमयमयाओवि समहिओ जस्स
हर-हीर-पिआहिवि जस-गीअ-झुणी सुव्वए वीसुं; ३७
अखुडिअ-पडिहा-पसरस्स अग्गओ जस्स दप्प-कण्डूलं
खण्डिअ-नाण-प्पडिहं बुहं[1]-चुडं गउअ-चण्डंव; ३८

३६. मध्यमलोके मर्त्यलोके कतमत् सप्तपर्णवनं सप्तच्छदकाननं रिपुभिर्न त्यक्तम् नवसप्तपर्णपरिमलमदान् गजान् यस्य संस्मृत्य ॥

कइमं । मज्झिम । "मध्यमकतमे द्वितीयस्य" [ ४८. ] इति अत इत्वम् ॥

छत्तिवण्ण छत्तवण्ण । "सप्तपर्णे वा" [ ४९. ] इति अत इत्वं वा ॥

३७. अमृतस्य विकारः अमृतमयः स इव अथ वा अमृतमयादपि सुधाविकारादपि समधिकः समग्रीलो यस्य यशसो गीतस्य गानस्य ध्वनिर्निनादः आस्तां तावद् अन्यजनैः किं तु हरः ईश्वरः हरप्रिया गौरी ताभ्यामपि विष्वक् समन्तात् श्रूयते ॥

अमयमइओ अमयमयाओ । "मयट्यइर्वा" [ ५०. ] इति आदेरतो अइः वा ॥

हर हीर । "ईर्हरे वा" [ ५१. ] इति आदेरतो वा ईः ॥

झुणी वीसुं । "ध्वनिविष्वचोरुः" [ ५२. ] इति आदेरस्य उत्वम् ॥

३८. अखण्डिता अच्छिन्ना प्रतिभा । नवनवोल्लेखशालिनी [प्रज्ञा] प्रतिभा । तस्याः प्रसरो यस्य तस्य यस्य अग्रतः पुरतो दर्पेण सकलशास्त्राद्भुतावबोधाभिमानेन पूर्वं कण्डूलं खर्जूलं खण्डिता निरुत्तरत्वाच्छिन्ना ज्ञानप्रतिभा यस्य तद् बुधचण्डम्[1] । उत्प्रेक्ष्यते । गवया गवाकृतयः सास्नारहिता आरण्यकपशवः तेषां चण्डमिव[2] ॥

अखुडिअ खण्डिअ । चुडं[3] चण्डं । "चण्डखण्डिते[3] णा वा" [ ५३. ] इति आदेरस्य णेन सह उत्वम् ॥

१ B C बुहंचुंद्रं गउवचंद्रंव.

1 B C °चंद्रं. 2 B C चंद्रमिव. 3 B C चुंद्रं चंद्रं । चंद्रखंडिते &c.

अस-पुढुमो, धनु-पुढमो, छुरिया-पढुमो अ, सेल्ल-पढमो य,
सव्वण्णुव्व, अहिण्णू जो सयल-कला-कलावस्स ; ३९

उर-सेज्जाइवि हरिणो सुन्देर-घरम्मि सइ सिरी अथिरा,
जस्स गुण-वेल्लि-तरुणो थिरासि भू-वल्लि-पेरन्ते; ४०

जस्स य दिस-पज्जन्ते अहरिअ-जोण्होक्करो जसोक्केरो,
अच्छेर-निरीहाणवि अच्छरिअं किंव न करेइ ? ४१

गउअ । "गवये वः" [ ५४ ] इति वस्य उत्वम् ॥

३९. असौ प्रथमः धनुषि प्रथमः छुरिकायां प्रथमश्च । सेल्लेति देश्यः प्रासवाची । तस्मिन् प्रथमश्च । असिधनुश्छुरिकासेल्लशब्दैः एतत्क्रियापटवः सुभटा उच्यन्ते । तेषु प्रवरः स्वघातदानपरघातवञ्चनादिक्रियानिपुणत्वात् । किं बहुना यः सकलकलाकलापस्य अभिज्ञो विचक्षणः । किं च सर्वज्ञ इव सर्ववेदीव ॥

पुढुमो पुढमो पढुमो पढमो । "प्रथमे पथोर्वा" [ ५५ ] इति पथयोः अस्य युगपत् क्रमेण च उर्वा ॥

सवण्णु । अहिण्णु । "ज्ञो णत्वेभिज्ञादौ" [ ५६ ] इति ज्ञस्य णत्वे ज्ञस्यैव अत उत्वम् ॥

४०. आस्तां तावत् स्वावासकमलादौ अस्थिरा । सौन्दर्यगृहे हरेः उरःशय्यायामपि [सदा] श्रीः अस्थिरा चञ्चला । परं सापि गुणा एव यशःप्रसूनजनकत्वाद् वल्लयः वल्ल्यः तासां तरुरिव आधारभूतत्वात् । तस्य यस्य भूवल्लिपर्यन्ते सकले पृथ्वीवलये स्थिरा आसीत् । चापलम् अपास्य यस्मिन् गुणगणनिधौ लक्ष्मीः स्थितेति भावः ॥

सेज्जा । सुन्देर । "एच्छय्यादौ" [५७] इति आदेरस्य एत्वम् ॥

४१. पूर्ववर्णनापेक्षया चः समुच्चये । यस्य दिक्पर्यन्ते अधरितः पराभूतो ज्योत्स्नायाश्चन्द्रिकाया उत्करो राशिर्येन स यशउ-

जो आसि बम्भचेर-ग्गहण-गुरू पइ-विओअ-विहुरस्स
रण्णन्तग्गय-रिउ-अन्तेउर-पोम्मच्छि-लोअस्स; ४२
पय-पउम-नमोक्कारे परोप्परामद्द-तुट्ट-हारेहिं
जस्स सहाइ निवेहिं ओप्पिअमिव मुत्तिआहरणं; ४३
जत्थप्पिअ-भू-भारो सुवइ फणी— तत्थ सोवइ हरीवि—
जोन्नत्थ-दिन्न-भारो न उणाइ, सयालुओ न उणा; ४४

त्करो न केवलम् अन्येषाम् आश्चर्यकौतुकनिरीहाः सद्ध्यानविन्यस्तचित्तत्वात् निराकाङ्क्षास्तेषां यमिनामपि आश्चर्यं किमिव न करोति । किं तु सर्वम् आश्चर्यं वितनोतीत्यर्थः ॥

वेल्लि वल्लि । पेरन्ते पज्जन्ते । जोण्होक्करो जसोक्केरो । अच्छेर अच्छरिअं । "वल्ल्युत्करपर्यन्ताश्चर्ये वा" [ ५८. ] इति वा आदेरस्य एत्वम् ॥

४२. ब्रह्मचर्यं मैथुनसेवनविरमणं तस्य ग्रहणे अङ्गीकारणे गुरुः दीक्षादाता य आसीत् पत्युर्वियोगेन विधुरस्य सकष्टस्य अरण्यस्य अन्तः मध्ये गतो यो रिपूणाम् अन्तःपुरपद्माक्षीलोकः अवरोधवधूजनस्तस्य । सर्वशत्रूणां निर्मूलकाषंकषितत्वात् तन्नायिकानां ब्रह्मचर्यदीक्षादानम् । ब्रह्मचारी प्रायः अरण्यचारी भवतीत्युक्तिलेशः ।

बम्भचेर । "ब्रह्मचर्ये चः" [ ५९. ] इति चस्यात एत्वम् ॥

अन्तेउर । "तोन्तरि" [ ६०. ] इति तस्यात एत्वम् । क्वचिन्न । रण्णन्तग्गय ॥

४३. पदपद्मनमस्कारे । क्रियमाणे इति शेषः । परस्परामर्देन अन्योन्यसंघर्षेण त्रुटिताः स्रस्ता ये हारास्तैः कृत्वा नृपैर्यस्य सभाया मौक्तिकाभरणमिव अर्पितं दत्तम् ॥

पोम्म । "औत् पद्मे" [६१.] इति आदेरतः ओत्वम् । "पद्मछद्म०" [२.११२] इति विश्लेषे न । पउम ॥

नमोक्कारे । परोप्परा । "नमस्कारपरस्परे द्वितीयस्य" [६२.] इति अत ओत्वम् ॥

४४. यत्र अर्पितभूभारः स्वपिति फणी शेषः तत्रैव अर्पितभूभारः

जइ सक्को न उण नरो न उणो नारायणोवि सारिच्छो
जस्स, पुणाइ-पुणाइवि भुवणाभय-दाण-ललिअस्स; ४५
रण्णे अरण्ण-साणाउलम्मि लाऊ-लया-हरे रुन्नं
जस्सारि-वहूहि तहा, अलाउ-कुल्ला जह कयाओ; ४६
उक्खय-संठविअ-निवेण जेण वच्छत्थलाओ हरिणोवि
उक्खाया भुय-दण्डे निअम्मि संठाविया लच्छी; ४७

हरिरपि स्वपिति। यः पुनः अन्यत्र न दत्तो भारः अर्थाद् भुव एव येन। अत एव च न पुनः शयालुः आलस्योपहतः॥

ओप्पिअ जत्थाप्पिअ। "वाऽर्पौ" [६३.] इति अर्पयतेः आदेरस्य ओत्वं वा॥

सुवइ सोवइ। "स्वपावुच्च" [ ६४. ] इति स्वपितौ आदेरस्य ओत् उच्च॥

४५. यस्य यदि शक्रः इन्द्रः सदृक्षो न। पुनः नरः अर्जुनो न पुनर्नारायणोपि। कुतः। पुनःपुनरपि भूयोभूयोपि भुवनस्य सकलसचराचरलोकस्य यद् अभयदानं वधनिवर्तनं तेन ललितस्य मनोहरस्य। यदीति संभावने। शौर्यादिभिः इन्द्रो यत्तुल्यः संभाव्यते। परमार्थतस्तु सोप्यविरतत्वाद् यत्तुल्यो नास्तीत्यर्थः॥

न उणाइ न उणा। "नात् पुनर्यादाइ वा" [६५.] इति आदेरस्य आ आइ इत्यादेशौ वा। पक्षे। न उण न उणो। केवलस्यापि दृश्यते। पुणाइ॥

४६. अरण्ये अरण्यश्वभिः वृकैः आकुले संकीर्णे अलाबूलतागृहे तुम्बिनीवल्लिमण्डपे यस्य अरिवधूभिः तथा अनवरताश्रुपनीपतनेन रुदितं यथा अलाबूनां सेकाय कुल्याः सारणयः कृताः॥

रण्ण अरण्ण। लाऊ अलाउ। "वालाब्वरण्ये लुक्" [६६.] इति आदेर्लुक्॥

४७. अहम् एवं मन्ये। येन हरेरपि वक्षःस्थलात् लक्ष्मीः उत्खाता उत्पाटिता ततो निजभुजादण्डे संस्थापिता। कथम् एवं ज्ञायत इति विशेषणद्वारेण हेतुम् आह। पूर्वम् उत्खाताः अभक्तत्वात् स्वस्था-

अह कइयावि दिवा-मुह-पत्थावे पत्थरोचिअं तस्स
अणुरागागय-मरहट्ठमाइ-सूएहिं इअ पढिअं : ४८
हय-मंसल-तम-पसरो सइ वामो पंसुलाण[1] पच्चूसो,
सामय-वय-दिन्नग्घो तंवं पयट्टो सया पुन्नो. ४९

नाख्याविताः पश्चात् सेवावशवर्तित्वात् संस्थापिता देशाधिपत्ये नियोजिता नृपा अनेनेति नृपस्वभावेन हरेः प्रियाया अपि इत्थं संभाव्यते । कविमार्गे विभूतिहरिप्रिययोरैक्याद् एवं वर्णना ॥

तहा जह । उक्खय उक्खाया । संठविअ संठाविया । "वाव्ययोत्खातादावदातः" [ ६७. ] इति आदेराकारस्य अत् वा ॥

४८. अथ अनन्तरं कदाचिदपि कस्मिंश्चित् काले दिवामुखप्रस्तावे वासरप्रारम्भावसरे तस्य श्रीकुमारपालभूपालस्य प्रस्तावोचितं प्रभातपठनीयम् अनुरागेण अत्यद्भुतगुणगणश्रवणसंजातदर्शनस्नेहेन आगता ये ते च ते महाराष्ट्रः आदिर्येषां देशानां ते तथा तेषां सूताश्च मङ्गलपाठकास्तैः इति वक्ष्यमाणं पठितम्[1] ॥

पत्थावे पत्थवो । "घञ्वृद्धेर्वा" [६८.] इति आदेराकारस्य अत् वा । क्वचिन्न । अणुरागो ॥

मरहट्ठ । "महाराष्ट्रे" [६९.] इति आदेराकारस्य[2] अत् । वक्रादित्वाद् अनुस्वारः । बाहुलकाद् अन्यस्यापि व्यञ्जनस्य मः ॥

४९. अथ द्वाविंशत्या गाथाभिः सूतोक्तम् एवाह । हतः नवदिनकरकरसंपर्काद् ध्वस्तः मांसलः सूचिभेद्यस्तमःप्रसरः तिमिरप्रवृत्तिर्येन सदा वामः विटादिगृहगतिनिषेधकत्वेन प्रतिकूलः । कासाम् । पांसुलानां स्वैरिणीनाम् । श्यामाकपयोभिः आरण्यव्रीहिजलैः दत्तः त्रिप्रदक्षिणापूर्वं मार्तण्डमण्डलं प्रति क्षिप्तः अर्घः पूजा यत्र । प्रत्यूषः अहर्मुखम् । पुण्यः सकललोकलोचनान्ध्यपटलविध्वंसकत्वेन प्र-

१ B पुंस°.

1 B C पाठितम्. 2 B C °राकारः स्यात् for °राकारस्य अत्.

दिस-कुप्पिसन्त-जस-भर देवय-हरए तुमं सकुप्पासा
दिक्खाइरिआ सिक्खायरिएहि सहोवसप्पन्ति. ५०
गय-थीण-तिमिर-केसे खल्लीडे नह-सिरम्मि संवुत्ते,
थुवआ हंवन्ति[1] लोआ एण्हिं सुण्हाल-चिन्धस्स. ५१

शस्यः प्रवृत्तः संजातः । त्वमिवेति । भवानप्येवंविधः । जिनवचनावबोधाद् ध्वस्तनिबिडाज्ञानप्रवृत्तिः । पांशुलानां पाप्मिनां सदा वामः दुःखदायित्वात् । सामजव्रजैः हस्तिघटाभिर्दत्तः अर्घः उपायनं यस्मै । सदाचारनिरतत्वात् पवित्रश्चेति ॥

[मंसल । पंसुला । "मांसादिष्वनुसारे" ॥ ७० ॥ मांसप्रकारेष्वनुस्वारे सति आदेरातोऽत् ॥]

सामय । "श्यामाके मः" [ ७१. ] इति मस्य आत अत ॥

५०. दिक्षु कूर्पासः कञ्चुलिका तद्वद् आचरन् यशोभरो यस्य स तथा तस्यामन्त्रणम् । हे दिक्कूर्पासवद्यशोभर देवतागृहे सकूर्पासाः सकञ्चुका दीक्षाचार्या बटुककरणादिसंस्कारकारिणः[1] शिक्षाचार्यैः शास्त्रपाठकैः सह त्वाम् उपसर्पन्ति । आशीर्वादप्रदानार्थं समीपम् आगच्छन्ति । इदानीम् इति प्रक्रमाज्ज्ञेयम् । एवम् अन्यत्रापि ॥

सइ सया । कुप्पिसं कुप्पासा । "इः सदादौ वा" [७२.] इति आत इत्वं वा । दिक्खाइरिआ सिक्खायरिएहि । "आचार्ये चोऽच्च" [ ७३. ] इति चस्य आत इत्वम् अत्वं च ॥

५१. गतं नष्टं स्त्यानं घनं तिमिरमेव श्यामवर्णत्वात् केशा यत्र । अत एव खल्वाटे खलतौ नभ एव सकललोकस्य उपरिवर्तित्वात् शिरस्तस्मिन् संवृत्ते जाते सति सास्नालचिह्नस्य वृषभध्वजस्य भगवत आदिनाथस्य शूलिनश्च इदानीं प्रत्यूषे लोका आर्हतमाहेश्वराः स्तावकाः स्तोतारो भवन्ति ॥

थीण । खल्लीडे । "ई स्त्यानखल्वाटे" [ ७४. ] इति आदेरातः ई ॥

थुवआ । सुण्हाल । "उः सास्नास्तावके" [ ७५ ] इति आदेरातः उत्वम् ॥

---

१ B C वहंति.

---

1 B C °संस्कारिणः for संस्कारकारिणः.

गयणे तुहिणोसारिरिणि[१] तुहिणासारं पडन्तम् अगणन्ता,

उट्ठन्ति वहूओ पुरो अज्जूणं विणय-गेज्झाण. ५२

कुट्टिम-चउ-वारेसुं सतिण्हम् इण्हिं कुणन्ति रमणीओ

देरागय-पारावय-रावेहिं अ पिअ-परीरम्भं. ५३

पारेवय-मणिएहिं तेत्तिअमेत्तं रमेसु वेसाओ,

तेत्तिअमत्तं मग्गन्ति चलिअ-मेत्ते भुअङ्गम्मि. ५४

५२. तुहिनस्य प्रालेयस्य आसारो वेगवद्वर्षो विद्यते यस्मिन् एवंभूते गगने सति तुहिनासारं पतन्तं शरीरे लगन्तम् अगणयन्त्यः अमन्यमाना विनयग्राह्याणां भक्त्या आवर्जनीयानाम् आर्याणां श्वश्रूणां पुरः पूर्वं वध्वः उत्तिष्ठन्ति ॥

तुहिणोसारिरिणि[1] तुहिणासारं । "ऊद् वासारे" [७६.] इति आदेरात ऊत् वा ॥

अज्जूणं । "आर्यायां र्यः श्वश्र्वाम्" [७७.] इति र्यस्य आत ऊः ॥

गेज्झाण । "एद्ग्राह्ये" [७८] इति एत्त्वम् ॥

५३. कुट्टिमानि मण्यादिभिर्बद्धतलानि चतुर्द्वाराणि चतुर्मुखगृहविशेषास्तेषु सतृष्णं दिने आशङ्कितभाविबहुविरहत्वेन सतर्षं यथा भवति एवम् इदानीं प्रातःक्षणे द्वारेषु आगता ये पारापतास्तेषां रावैः शब्दैरुत्थिता जागरिता ये प्रियास्तेषां परीरम्भम् आलिङ्गनं रमण्यः कुर्वन्ति ॥

देरा । "द्वारे वा" [७९.] इति आत एत्त्वं वा । पक्षे वारे । दुआरं । दारं इति प्रयोगद्वयम् अनुक्तमपि ज्ञेयम् ॥

५४. पारापतमणितानीव कलरवकूजितानीव यानि मणितानि रतकूजितानि तैः कृत्वा यावान् प्रतिज्ञातः कालस्तावन्मात्रं वेश्याः पण्याङ्गना अरंसिषत अक्रीडिषुः । भुजङ्गे विटे चलितमात्रे गमनोन्मुख एव तावन्मात्रं प्रतिज्ञातकालमनितं मार्गयन्ति गवेषयन्ति ॥ पूर्वार्धे जिरिअमित्तम् इति तु रम्यः पाठः ॥

---

१ B °सारणि.

1 B °सारणि.

अद्द-नहङ्काण पियाण अल्ल-आलावयाण विलयाओ
उल्लन्ति अङ्कम् अंसुअ-ओलीहिं ओल्ल-नक्खङ्का. ५५
निअ-ठाण-मीलणं पिक्खिऊण चिन्ता-परा मिउल्लावा
नीलुप्पल-पेण्डे पिण्डिऊण, भसला रुअन्तिव्व. ५६

पारावय पारेवय। "पारापते रो वा" [८०.] इति रस्य आत एत्त्वं वा ॥

तेत्तिअमेत्तं तेत्तिअमत्तं। "मात्रटि वा" [८१.] इति आत एत्त्वम्। बाहुलकात् क्वचिन्मात्रशब्देपि। चलिअ-मेत्ते ॥

५५. आर्द्रास्तत्कालदत्तत्वात् सरसा नखाङ्काः कररुहव्रणानि येषाम् आर्द्राः स्नेहमिश्रा आलापाः परस्परोक्तयो येषां ते तथा। तेषां प्रियाणाम् अङ्कम् उत्सङ्गम् आर्द्रनखाङ्का वनिता योषितः अश्रुवालिभिः नेत्रबाष्पपङ्क्तिभिः आर्द्रयन्ति आर्द्रं कुर्वन्ति। सर्वरात्रं सुरतादिसुखनिमग्ना वयम् इदानीं च तदुच्छेदजनकः प्रियविप्रयोगो भवितेति दुःखाद् रुदन्तीत्यर्थः ॥

उल्लन्ति ओल्ल। "उदोद् वार्द्रे" [८२.] इति आदेरातः उत् ओच्च वा। पक्षे अद्द। अल्ल ॥

ओलीहिं। "ओदाल्यां पङ्क्तौ" [८३.] इति आत ओत्त्वम् ॥

५६. प्रातः संकोचात् प्रागेव नीलोत्पलेभ्यो निर्गत्य रारट्यमानान् तत्कोशस्थांश्च भ्रमरान् वीक्ष्य कविः एवम् ऊहमानः प्राह। निजस्थानमीलनं स्वावाससंकोचं प्रेक्ष्य विलोक्य चिन्तापराः क्व वयम् इदानीं निराश्रयाः स्थास्याम इत्यादिविकल्पसंकल्पनिष्ठाः। मृदुः सकष्टत्वात् कृशः उल्लापः अन्योन्यजल्पनं येषां ते तथा सन्तो भसला नीलोत्पलपिण्डे असितोत्पलकोशे पिण्डयित्वा मिलित्वा रुदन्तीव। येषां किल राजादिना गृहं मुच्यते तेपि मिलित्वा रुदन्तीत्युक्तिलेशः ॥

मिउल्लावा। "ह्रस्वः संयोगे" [८४.] इति यथादर्शनं ह्रस्वः ॥

किंसुअ-कुसुमायम्बो केंसुअ-दल-सामलं विगय-मेरं
दलिऊण अन्धयारं, दंसइ पुहवीइ पहम् अरुणो. ५७
काउं महाविलं अतम-मूसयं कय-पडंसुए सूरे,
लक्ख-हलद्द-बहेडय-रत्तव्व करा विअम्भन्ति. ५८
विरइअ-हलद्दि-कन्दाभ-दीवओ नव-हलिद्दि-रत्त-करो,
अहलिद्दा-राओ कामउव्व पुव्वं भअइ सूरो. ५९

पेण्डे पिण्डिऊण। "इत एद्वा" [८५.] इति आदेरिकारस्य एत् वा। क्वचिन्न। चिन्ता॥

५७. किंशुकदलश्यामलं पलाशपलाशनीलं विगतमेरं सर्वत्र उच्छृङ्खलम् अन्धकारं दलयित्वा विध्वस्य किंशुककुसुमानीव आताम्रः आरक्तः अरुणः सूर्यः तत्सारथिर्वा पृथिव्याः पन्थानं दर्शयति॥

किंसुअ केंसुअ। "किंशुके वा" [८६.] इति आदेरितः एत्त्वं वा॥

मेरं। "मिरायाम्" [८७.] इति इत एत्वम्॥

५८. महाबिलं कन्दरादिकम् अविद्यमानस्तम एव मूषिको यत्र तत् तथाभूतं कर्तुं कृतप्रतिश्रुते विहितप्रतिज्ञे सूर्ये सति करा अंशवो विजृम्भन्ते ऊर्ध्वाधः प्रसरन्ति। कीदृशाः लाक्षाहरिद्राविभीतकै रक्ता इव॥ प्रातःक्षणे दिनकरकराणां क्रमेण तथाभावाद् इत्थम् उत्प्रेक्षा॥

५९. विरचिता विहिता विष्वग्विसारिप्रभारहितत्वेन हरिद्राकन्दाभा दीपा येन। नवहरिद्रया रक्ता इव करा यस्य स सूरः पूर्वां भजति। अहरिद्रारागो निबिडस्नेहः कामुक इव। तस्मिन्नप्यागच्छति कान्तया दीपः क्रियते। कुङ्कुमादिना आरक्तकरश्च स भवति। अत्र कामुक इत्युपमानात् पूर्वस्याः कान्तात्वं निरूप्यते॥

पुहवीइ। पह। मूसयं। पडंसुए। हलद्दा। हलद्दी। बहेडय। "पथिपृथिवी°"

---

१ B व°.

---

[1] B C omit अ°. [2] B C °स्नेहकामुक for °स्नेहः कामुक. [3] B C व°.

पिक्कङ्कुअंव निवडइ पिक्किङ्कुअ-धूसरो ससी एस,[1]
सिढिल-करो सढिलङ्गो तित्तिर-मइल-प्फुड-कलङ्को. ६०
इअ आसंसन्ति नि-सीह सिंहदत्ताइणो दिआ तुज्झ,
वीसं तीसं कप्पे जयसु दुजीहारि-नीसङ्क. ६१
अदुइअ-रवि-भा-विइए गयणे, जह पाइयंम्मि दो-वयणं,
कत्थवि नत्थि तमो. अहि-निवास-लोअम्मि व णुमन्नो. ६२

इत्यादिना [८८.] आदेरितः अकारः । हरिद्रायां विकल्प इत्यन्ये । हलिद्दी । अहलिद्दा ॥

६०. शिथिलकरो मन्दकिरणः शिथिलाङ्गो मन्दबिम्बः । तित्तिरिर्लावकः । तद्वन्मलिनः स्फुटः कलङ्को यस्य । पक्केङ्गुदवत् परिपाकप्राप्ततापसतरुफलवद् धूसरो धूम्रः एष शशी पक्वेङ्गुदवत् निपतति अस्ताचले स्रंसते ॥

पिक्कङ्कुअं पिक्किङ्कुअ । सिढिल सढिल । "शिथिलेङ्गुदे वा" [८९.] इति आदेरितः अद् वा ॥

तित्तिर । "तित्तिरौ रः" [९०.] इति रस्य इतः अत् ॥

६१. हे नृसिंह नरोत्तम सिंहदत्तादयो द्विजाः तव इति आशंसन्ति आशीर्वादं कुर्वन्ति । तदेवाह । हे द्विजिह्वारिर्गरुडस्तद्वद् निःशङ्क निर्भय त्वं विंशतिं त्रिंशतं कल्पान् जय । कल्पो देवयुगसहस्रद्वयम् ॥

इअ । "इतौ तो वाक्यादौ" [९१.] इति इतितस्य इतः अत् ॥

निसीह । वीसं । तीसं । जीहा । "ईर्जिह्वा°" इत्यादिना [९२.] जिह्वादिषु इकारस्य तिना ईः । बाहुलकात् क्वचिन्न । सिंहदत्त ॥

नीसङ्क । "लुंकि निरः" [९३.] इति रलोपे इत ईः ॥

६२. यथा प्राकृते क्वापि द्विवचनं नास्ति । "द्विवचनस्य बहुव-

---

१ B C पिक्कंगुअ.

जरढोच्छु-रुई[१] चन्दो निस-पिअ-पावासुओव्व नो सहइ,
सच्च-जेहुट्ठिल[२] सूरे भू-सग्ग-दुहाइअ-करोहे. ६३
धम्मे जहिट्ठिला दोहाइअ-पवहा दुहावि मल-पटलं,
ओज्झर-निज्झरिणीसुं[३] न्हाऊण खिवन्ति वम्हाणा[४]. ६४

चनम्" [ ३. १३०. ] इति वचनात् । तथा अद्वितीयरविभाद्वितीये निरुपमभास्करप्रभायुक्ते गगने सति तमः क्वापि नास्ति । तिर्यगूर्ध्वादिदेशेषु तद् अपश्यन् कविरेवम् ऊहते । अहीनां सर्पाणां वासे लोके पाताल इव निमग्नं प्रविष्टम् ॥

दुजीहा । णुमन्नो । "द्विन्योरुत्" [९४.] इति द्विनिशब्दयोः इत उत् ॥ बाहुलकात् क्वचिद् वा । अदुइअ । विइए ॥ क्वचिन्न । दिआ ॥[1] क्वचिद् ओत्वम् । दो-वयणम् ॥

६३. हे सत्ययुधिष्ठिर भूस्वर्गयोर्द्विधाकृतः पञ्चशत्या पञ्चशत्या पृथग्विहितः करौघो येन तस्मिन् सूरे सति जरठः परिपक्वो य इक्षुस्तद्वद् रुचिर्यस्य स तथाभूतश्चन्द्रो नो राजते । अत उत्प्रेक्ष्यते । निशैव प्रिया ततः प्रवासीव वियुक्त इव । अन्योपि यः प्रियावियुक्तः स विच्छायो भवति ॥

जरढोच्छु । पावासुओ । " प्रवासीक्षौ " [९५.] इति आदेरित उत्त्वम् ॥

६४. धर्मे सदाचारे युधिष्ठिराः द्विधाकृतो मध्यप्रवेशेन खण्डितः प्रवाहः ओघो यैस्ते निर्झरनिर्झरिणीषु[2] झरनदीषु स्नात्वा शौचं कृत्वा द्विधापि बाह्याभ्यन्तरभेदेन द्विप्रकारमपि मलपटलं रजःस्तोमं ब्राह्मणाः क्षिपन्ति ॥

जहुट्ठिल जहिट्ठिल । " युधिष्ठिरे वा " [ ९६. ] इति आदेरित उत्त्वम् ॥

दुहाइअ दोहाइअ । " ओच्च द्विधाकृगः " [९७.] इति ओत्त्वम् उत्त्वं च ॥ क्वचित् केवलस्यापि । दुहा ॥

ओज्झर निज्झर । " वा निर्झरे ना " [ ९८. ] इति नेन सह इत ओत्त्वं वा ॥

---

१ B C °रुई. २ B C जुहिट्ठिल. ३ B निज्झरणी°. ४ B वम्हाण. C तन्हाणा.

---

1 B C insert निवास before क्वचित्. 2 B C °निर्झरणीषु.

हय-कम्हार-हरडई-चिक्किण-तिमिरस्स, गहिय-पाणीया,
पाणिय-तडम्मि विप्पा अजुण्ण-सूरस्स देन्तग्घं. ६५
जिण्ण-तमं मल-हीणा अहूण-तेअं विहीण-अन्न-पहं,
अविहूणं तूह-दिआ थुणन्ति तित्थे रविं तं व. ६६
पेऊसासण-सामिय-दिस-आमेले रविम्मि उअ तारा,
केरिस-एरिसि[1]आओ बहेडयाभाओं नह-पेढे. ६७

६५. हतं विदारितं कश्मीराणां हरीतकीव चिक्कणं निबिडं तिमिरं येन तस्य। अजीर्णो नवः स चासौ सूर्यश्च तस्य पानीयस्य निर्झरनद्यादिसंबन्धिजलस्य यत् तटं तस्मिन्। गृहीतं करपुटे कृतं पानीयं यैस्ते विप्रा अर्घम् अर्घाञ्जलिं ददति त्रिःप्रदक्षिणापूर्वं वितरन्ति॥

हरडई। "हरीतक्याम् ईतोऽत्" [ ९९. ] इति आदेरीतः अत्॥

कम्हार। "आत् कश्मीरे" [ १००. ] इति ईत आत्॥

पाणिअ। "पानीयादिष्वित्" [१०१.] इति ईत इत्॥ क्वचिद् वा। पाणीय॥

६६. जीर्णं ध्वस्तं तमस्तिमिरम् अज्ञानं च येन। अविहीनतेजसम् अन्यूनद्युतिम् उग्रप्रतापं च। विहीनः सन्मार्गप्रदर्शनेन विध्वस्तः अन्यो विपरीतः पन्था मार्गः अन्यायश्च येन। अविहीनम् अत्युच्चं पूर्वाचलचूलासंस्थं सकलभूपालप्रवरं च। तीर्थे आदित्यालये नद्याद्यवतारे वा तीर्थस्य तीर्थभूता वा द्विजा रविं त्वामिव स्तुवन्ति। रविं त्वां च स्तुवन्तीत्यर्थः॥

अजुण्ण। "उज्जीर्णे" [१०२.] इति ईत उत्॥ क्वचिन्न। जिण्ण॥

हीण अहूण। विहीण अविहूणं। "ऊ हीनविहीने वा" [ १०३. ] इति ईत ऊत्वं वा॥

तूह। "तीर्थे हे" [ १०४. ] इति ईत ऊः। हे इति किम्। तित्थे॥

६७. पीयूषाशना देवास्तेषां स्वामी इन्द्रः तस्य दिक् पूर्वा तस्या आपीडे शोभाकृत्त्वेन अवतंसे रवौ सति उअ इति पश्य। विभीतक-

---

१ B C केरिसएरिसआओ.

चत्तूण नेड-पीढं नीड-घरा मउलिआ, मही-मउड,
विद्दाय-निद्दम् उड्डन्ति घरोवरिं रुक्ख-अवरिं च. ६८
गरुआवि गुरुअ-भिउडीहिँ वार-वालेहि पडिखलिज्जन्ता,
बहु-पोरिसावि पुरिसा निरुद्ध-छीआ[1] इहं एन्ति. ६९

वद् आभा सादृश्यं यासां तास्तारा नभःपीठे कीदृश्य ईदृश्यः। न कीदृश्योपीत्यर्थः॥

पेऊस। आमेले। केरिस। एरिसिआओ। बहेडया। "एत् पीयूष°" इत्यादिना [१०५.] एषु ईत एत्त्वम्॥

६८. हे पृथ्वीमुकुट पूर्वं मुकुलिता रात्रौ एकत्र स्थितास्ततो नीडपीठं कुलायतलं त्यक्त्वा नीडगृहाः पक्षिणो विद्रुतनिद्रं गततन्द्रं यथा भवति एवम् उड्डीयन्ते गृहस्योपरि वृक्षस्योपरि च॥

पेढ पीढं। नेड नीड। "नीडपीठे वा" [१०६.] इति ईत एत्त्वम्॥

मउलिआ। मउड। "उतो मुकुलादिष्वत्" [१०७.] इति एषु आदेरुतः अत्वम्॥ क्वचिद् आत्त्वमपि। विद्दाय॥

घरोवरिं अवरिं। "वोपरौ" [१०८.] इति उतः अत् वा॥

६९. गुरुकभ्रुकुटिभिर्द्वारपालैः प्रतीहारैः प्रतिस्खल्यमाना निरुध्यमाना गुरुका अपि कुङ्कुणादिदेशस्वामिनोपि बहुपौरुषा अपि प्रचुरपराक्रमा अपि पुरुषाः मा भूत् अस्मत्स्वामिनः क्वापि कार्ये अशकुनम् इति निरुद्धक्षुता इह युष्मत्पादपद्मान्तिके आयन्ति आगच्छन्ति॥

गरुआ गुरुअ। "गुरौ के वा" [१०९.] इति स्वार्थिके के आदेरुतः अत् वा॥

भिउडीहिँ। "इर्भ्रुकुटौ" [११०.] इति आदेरुत इः॥

पोरिसा। पुरिसा। "पुरुषे रोः" [१११.] इति रोरुत इत्वम्॥

छीआ। "ई क्षुते" [११२.] इति आदेरुत ई॥

---

१ B पुरिसा रुद्ध-च्छीआ.

मुसल-धर-वाहु-मूसल रइ-सूहव-सुहय तुज्झ मुह-कमलं
दट्ठुं, ऊसुअ-नयणा पुणो-पुणो ऊससन्ति निवा. ७०
अणउच्छन्नोच्छाहो रिउ-दुसहो दूसह-प्पयावेण,
वोक्कन्त-निद्द-पसरो अह राया ओट्ठिओ सयणा. ७१
कोऊहल-कुसलेहिं कुऊहलत्थेसु कोउहल्लीवि,
सण्हाणवि सुण्हयरं परमप्पं थुणिय सव्वण्णुं, ७२
अमलोव्वीढ-दुअल्लो उव्वूढ-दुऊल-दण्डि-दिन्न-करो,
सो अत्थाणिं पत्तो दुगुल्ल-उल्लोअ-सोहिल्लं. ७३

७०. मुसलधरबाहू इव बाहुमुसलौ यस्य तस्य आमन्त्रणम्। तथा रतिसुभगः कन्दर्पः तद्वत्सुभग सकललोकप्रिय हे राजन् तव मुखकमलं दृष्ट्वा उत्सुकानि सोत्कण्ठानि नयनानि येषां ते नृपाः पुनःपुनः उच्छ्वसन्ति भूयोभूयः पुलकिताङ्गा भवन्ति ॥

मुसल मूसल। सूहव सुहय। "ऊत् सुभग०" इत्यादिना [११३.] आदेरुत ऊद् वा ॥

७१. अनुच्छिन्नोत्साहः अखण्डितोद्यमः दुःसहप्रतापेन उग्रतेजसा रिपुदुःसहः अथ एवं मङ्गलपाठकपठितानन्तरं व्युत्क्रान्तनिद्राप्रसरो जागरितः सन् राजा शयनाद् उत्थितः ॥

ऊसुअ। ऊससन्ति। "अनुत्साहोत्सन्ने त्सच्छे" [११४.] इति आदेरुत ऊत् ॥ अनुत्साहोत्सन्न इति किम्। उच्छन्नोच्छाहो ॥

दुसहो दूसह। "लुकि दुरो वा" [११५.] इति रलोपे उत ऊत् वा ॥

वोक्कन्त। ओट्ठिओ। "ओत् संयोगे" [११६.] इति संयोगे परे आदेरुत ओत्वम् ॥

७२. ७३. अधुना राज्ञः प्रातस्त्यं कृत्यम् आह। युग्मम्।[1] कुतूह-

[1] B is wanting in the commentary on the two couplets from कुतूहलकुशलैः up to करो यस्येति. We with C.

**तस्स भुमयाइ वसगा, अवाउला, पेसणिक्क-हणुमन्ता,**

**बल-कण्डुअमाण-भुआ, पुरो निविट्ठा निवा नमिरा. ७४**

**पासम्मि ठिआ तस्स य महूअ-गोरीओ महुअ-महुर-गिरा,**

**वज्जन्त-कणय-नूउर-मणि-नेउर-वइर-निउराओ ; ७५**

लकुशलैः कौतुकनिपुणैः कृत्वा कुतूहलार्थेषु कुतुकवस्तुषु कुतूहल्यपि सूक्ष्माणां परमाण्वादीनां मध्येपि सूक्ष्मतरं दुर्ज्ञेयत्वाद् अणुतरं सर्वज्ञं लोकालोकपदार्थपरिज्ञानचतुरं परमात्मानं स्तुत्वा स कुमारपालभूपः दुकूलानाम् उल्लोचैः शोभावतीम् आस्थानीं प्राप्तः । किंभूतः सन् । अमलानि उज्ज्वलानि उद्व्यूढानि परिहितानि दुकूलानि शतपट्टांशुकानि येन उद्व्यूढदुकूलेन दण्डिना दत्तो गमनकाले वितीर्णः करो यस्येति ॥

कोऊहल कुऊहल कोउहल्ली । "कुतूहले वा ह्रस्वश्च" [११७.] इति उत ओत् वा तत्संनियोगे ह्रस्वश्च वा ॥

सण्हाण सुण्ह । "अदूतः सूक्ष्मे वा" [११८.] इति ऊतः अत् वा ॥ आर्षे सुहुमेति ज्ञेयम् ॥

दुअल्लो दुऊल । "दुकूले वा लश्च द्विः" [११९.] इति ऊकारस्य अत्वं वा तत्संनियोगे च लस्य द्विः ॥ [आर्षे] । दुगुल्ल ॥

अमलोव्वीढ उव्वूढ । "ईर्वोद्व्यूढे" [१२०.] इति ऊत ईत्वं वा ॥

७४. तस्य राज्ञो भ्रुवो वशगाः । भ्रूक्षेपमात्रेण समस्तकार्यसाधका इत्यर्थः । अवातूलाः युक्तकारिणः । प्रेषणे स्वामिनिरोपणे एके अद्वितीया हनूमन्तः । बलेन कण्डूयमानौ कण्डूलौ । सदर्पावित्यर्थः । तथाभूतौ भुजौ येषां ते नम्रा नृपाः पुरः अग्रे निविष्टाः ॥

भुमयाइ । अवाउला । हणुमन्ता । कण्डुअमाण । "उर्भ्रूह०" [१२१.] इत्यादिना ऊत उत्वम् ॥

७५. चतुर्भिः कलापकम् । चामरदर्पणहस्ता वारयुवत्यस्तस्य राज्ञः

१ B नविरा.

**स्मरेर्झर-झूर-भर-भल-लढ-विम्हर-सुमर-पयर-पम्हुहाः[1] ॥७४॥**

स्मरेरेते नवादेशा वा भवन्ति ॥ झरइ । झूरइ । भरइ । भलइ । लढइ । विम्हरइ । सुमरइ । पयरइ । पम्हुहइ । सरइ ॥

**विस्मुः पम्हुस-विम्हर-वीसराः ॥ ७५ ॥**

विस्मरतेरेते आदेशा भवन्ति ॥ पम्हुसइ । विम्हरइ । वीसरइ ॥

**व्याहृगेः[2] कोक्क-पोक्कौ ॥ ७६ ॥**

व्याहरतेरेतावादेशौ वा भवतः ॥ कोक्कइ । ह्रस्वत्वे तु कुक्कइ । पोक्कइ । पक्षे । वाहरइ ॥

**प्रसरेः पयल्लोवेल्लौ ॥ ७७ ॥**

प्रसरतेः पयल्ल उवेल्ल[3] इत्येतावादेशौ वा भवतः ॥ पयल्लइ । उवेल्लइ[3] । पसरइ ॥

**महमहो गन्धे ॥ ७८ ॥**

प्रसरतेर्गन्धविषये महमह इत्यादेशो वा भवति ॥ महमहइ मालई । मालई[4]-गन्धो पसरइ ॥ गन्ध इति किम् । पसरइ ॥

**निस्सरेर्णीहर-नील-धाड-वरहाडाः ॥ ७९ ॥**

निस्सरतेरेते चत्वार आदेशा वा भवन्ति ॥ णीहरइ[5] । नीलइ । धाडइ । वरहाडइ । नीसरइ ॥

**जाग्रेर्ज्जग्गः ॥ ८० ॥**

जागर्तेर्जग्ग इत्यादेशो वा भवति ॥ जग्गइ । पक्षे । जागरइ ॥

**व्याप्रेराअड्डः ॥ ८१ ॥**

व्याप्रियतेराअड्ड इत्यादेशो वा भवति ॥ आअड्डइ । वावरेइ[6] ॥

---

१ A °पम्हुहः. २ P °हृत्रेः. ३ A उव्वे°. ४ B मालइ°. ५ B नीह°. ६ B वावारइ.

**संवृगेः साहर-साहट्टौ ॥ ८२ ॥**

संवृणोतेः साहर साहट्ट इत्यादेशौ वा भवतः ॥ साहरइ । साहट्टइ । संवरइ ॥

**आदृङः सन्नामः ॥ ८३ ॥**

आद्रियतेः सन्नाम इत्यादेशो वा भवति ॥ सन्नामइ । आदरइ ॥

**प्रहृगेः सारः ॥ ८४ ॥**

प्रहरतेः सार इत्यादेशो वा भवति ॥ सारइ । पहरइ ॥

**अवतरेरोह-ओरसौ ॥ ८५ ॥**

अवतरतेः ओह ओरस इत्यादेशौ वा भवतः ॥ ओहइ । ओरसइ । ओअरइ ॥

**शकेश्चय-तर-तीर-पाराः ॥ ८६ ॥**

शक्नोतेरेते चत्वार आदेशा वा भवन्ति ॥ चयइ । तरइ । तीरइ । पारइ । सक्कइ ॥ त्यजतेरपि चयइ । हानिं करोति ॥ तरतेरपि तरइ ॥ तीरयतेरपि तीरइ ॥ पारयतेरपि पारेइ । कर्म समाप्नोति ॥

**फक्कस्थक्कः ॥ ८७ ॥**

फक्कतेस्थक्क इत्यादेशो भवति ॥ थक्कइ ॥

**श्लाघः सलहः ॥ ८८ ॥**

श्लाघतेः सलह इत्यादेशो भवति ॥ सलहइ ॥

**खचेर्वेअडः ॥ ८९ ॥**

खचतेर्वेअड इत्यादेशो वा भवति ॥ वेअडइ । खचइ ॥

**पचेः सोल्ल-पउलौ ॥ ९० ॥**

पचतेः सोल्ल पउल इत्यादेशौ वा भवतः ॥ सोल्लइ । पउलइ । पयइ ॥

---

१ P वृञेः. २ B आदृङः. ३ P B सन्नामेइ. ४ B आदरेइ. ५ P हृञेः. ६ A ओसर. ७ B °हरइ. ८ A त्यजेर°. ९ A तरइ । पार°. १० B °उल्लौ. ११ B पउल्ल. १२ B पउल्लइ.

**मुचेश्छड्डावहेड-मेल्लोस्सिक्क[1]-रेअव-णिलुञ्छ[2]-धंसाडाः ॥ ९१ ॥**

मु[3]ञ्चतेरेते सप्तादेशा वा भवन्ति ॥ छड्डइ । अवहेडइ । मेल्लइ । उ-स्सि[4]क्कइ । रेअवइ । णिलुञ्छइ । धंसाडइ । पक्षे । मुअइ ॥

**दुःखे णिव्वलः[5] ॥ ९२ ॥**

दुःखविषयस्य मुचेः[6] णिव्वल इत्यादेशो वा भवति ॥ णिव्वलेइ[7] । दुःखं मुञ्चतीत्यर्थः ॥

**वञ्चेर्वेहव-वेलव-जूरवोमच्छाः ॥ ९३ ॥**

वञ्चतेरेते चत्वार आदेशा[8] वा भवन्ति ॥ वेहवइ । वेलवइ । जूरवइ । उमच्छइ । वञ्चइ ॥

**रचेरुग्गहावह-विडविड्डाः[9] ॥ ९४ ॥**

रचेर्धातोरेते त्रय आदेशा वा भवन्ति ॥ उग्गहइ । अवहइ । विडविड्डइ[10] । रयइ ॥

**समारचेरुवहत्थ-सारव-समार-केलायाः ॥ ९५ ॥**

समारचेरेते चत्वार आदेशा वा भवन्ति ॥ उवहत्थइ । सारवइ । समारइ । केलायइ । समारयइ ॥

**सिचेः[11] सिञ्च-सिम्पौ ॥ ९६ ॥**

सिञ्चतेरेतावादेशौ वा भवतः ॥ सिञ्चइ । सिम्पइ । सेअइ ॥

**प्रच्छः पुच्छः ॥ ९७ ॥**

पृच्छेः[12] पुच्छादेशो भवति ॥ पुच्छइ ॥

**गर्जेर्बुक्कः ॥ ९८ ॥**

गर्जेतेर्बुक्क इत्यादेशो वा भवति ॥ बुक्कइ । गज्जइ ॥

---

१. A. B °ल्लोसिक्क°. २ B णिलुञ्छ°. ३ A मुंचतेः स°. ४ B उसिक्कइ. ५ B णिव्व°. ६ B मुचो. ७ B णिव्वलेइ. ८ B °शा भ°. ९ P °विडाः. १० P °विडइ. ११ A सिचेः. १२ B प्रच्छेः.

**वृषे [1]ढिक्कः ॥ ९९ ॥**

वृषकर्तृकस्य गर्जेर्ढिक्क इत्यादेशो[2] वा भवति ॥ ढिक्कइ । वृषभो गर्जति[3] ॥

**राजेरग्घ-छज्ज-सह-रीर-रेहाः ॥ १०० ॥**

राजेरेते पञ्चादेशा[4] वा भवन्ति ॥ अग्घइ । छज्जइ । सहइ । रीरइ । रेहइ । रायइ ॥

**[5]मस्जेराउड्ड-णिउड्ड[6]-बुड्ड-खुप्पाः ॥ १०१ ॥**

मज्जतेरेते[7] चत्वार आदेशा वा भवन्ति ॥ आउड्डइ । णिउड्डइ । बुड्डइ । खुप्पइ । मज्जइ ॥

**पुञ्जेरारोल-वमालौ ॥ १०२ ॥**

पुञ्जेरेतावादेशौ वा भवतः ॥ आरोलइ । वमालइ । पुञ्जइ ॥

**लस्जेर्जीहः ॥ १०३ ॥**

लज्जतेर्जीह इत्यादेशो वा भवति ॥ जीहइ । लज्जइ ॥

**तिजेरोसुक्कः ॥ १०४ ॥**

तिजेरोसुक्क इत्यादेशो वा भवति ॥ ओसुक्कइ । तेअणं ॥

**मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुंस-फुस[9]-पुस-लुह-हुल-रोसाणाः १०५**

मृजेरेते[10] नवादेशा वा भवन्ति ॥ उग्घुसइ[11] । लुञ्छइ । पुञ्छइ । पुंसइ । फुसइ[12] । पुसइ । लुहइ । हुलइ । रोसाणइ । पक्षे । मज्जइ ॥

**भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड-विर-पविरञ्ज[13]-करञ्ज-नीरञ्जाः ॥ १०६ ॥**

भञ्जेरेते नवादेशा वा भवन्ति ॥ वेमयइ । मुसुमूरइ । मूरइ । सूरइ । सूडइ । विरइ । पविरञ्जइ । करञ्जइ । नीरञ्जइ । भञ्जइ ॥

---

१ P B वृषेर्ढि°. २ B °शो भ°. ३ B गर्जतीत्यर्थः. ४ B °शा भ°. ५ P मज्जे°. ६ B °ड्डचुड्डथुड्डखु°. ७ B °ते पंच. ८ B °इ । चुड्डइ । थुड्डइ । खु°. ९ B °फुंस°. १० B मृजते°. ११ A उग्घसइ. १२ B फुंसइ. १३ A °विरंजनीरं°.

अनुव्रजेः पडिअग्गः ॥ १०७ ॥

अनुव्रजेः पडिअग्ग इत्यादेशो वा भवति॥ पडिअग्गइ। अणुवच्चइ॥

अर्जेर्विढवः ॥ १०८ ॥

अर्जेर्विढव इत्यादेशो वा भवति ॥ विढवइ । अज्जइ ॥

युजो जुञ्ज-जुज्ज-जुप्पाः ॥ १०९ ॥

युजो[1] जुञ्ज जुज्ज जुप्प इत्यादेशा भवन्ति ॥ जुञ्जइ । जुज्जइ । जुप्पइ ॥

भुजो भुञ्ज-जिम-जेम-कम्माण्ह-समाण-चमढ-चड्डाः ॥ ११० ॥

भुज एतेष्टादेशा भवन्ति ॥ भुञ्जइ । जिमइ । जेमइ । कम्मेइ[2] । अण्हइ । समाणइ । चमढइ । चड्डइ ॥

वोपेन कम्मवः ॥ १११ ॥

उपेन युक्तस्य भुजेः[3] कम्मव इत्यादेशो वा भवति॥ कम्मवइ। उवहुञ्जइ ॥

घटेर्गढः ॥ ११२ ॥

घटतेर्गढ इत्यादेशो वा भवति॥ गढइ। घडइ[4] ॥

समो गलः ॥ ११३ ॥

सम्पूर्वस्य घटतेर्गल इत्यादेशो वा भवति ॥ संगलइ । संघडइ ॥

हासेन स्फुटेर्मुरः ॥ ११४ ॥

हासेन करणेन यः स्फुटिस्तस्य मुरादेशो[5] वा भवति॥ मुरइ। हासेन स्फुटति ॥

मण्डेश्चिञ्च-चिञ्चअ-चिञ्चिल्ल-रीड-टिविडिक्काः ॥ ११५ ॥

मण्डेरेते[6] पञ्चादेशा वा भवन्ति ॥ चिञ्चइ । चिञ्चअइ । चिञ्चिल्लइ । रीडइ । टिविडिक्कइ । मण्डइ[7] ॥

---

१ B युजेरेते त्रय आदे°. २ B कम्मइ. ३ P भुजः. ४ B घटइ. ५ B °शो भ°. ६ P मुण्डे°. ७ P मुण्डइ.

**तुडेस्तोड-तुट्ट-खुट्ट-खुडोक्खुडोल्लुक्क-णिलुक्क[1]-लुक्कोल्लूराः[2] ॥ ११६ ॥**

तुडेरेते नवादेशा वा भवन्ति ॥ तोडइ । तुट्टइ । खुट्टइ । खुडइ । उक्खुडइ । उल्लुक्कइ । णिलुक्कइ[3] । लुक्कइ । उल्लूरइ[4] । तुडइ ॥

**घूर्णो[5] घुल-घोल-घुम्म-पहल्लाः ॥ ११७ ॥**

घूर्णेरेते चत्वार आदेशा भवन्ति ॥ घुलइ । घोलइ । घुम्मइ । पहल्लइ ॥

**विवृतेर्ढंसः ॥ ११८ ॥**

विवृतेर्ढंस इत्यादेशो वा भवति ॥ ढंसइ । विवट्टइ ॥

**क्वथेरट्टः ॥ ११९ ॥**

क्वथेरट्ट इत्यादेशो वा भवति ॥ अट्टइ । कढइ ॥

**ग्रन्थो गण्ठः ॥ १२० ॥**

ग्रन्थेर्गेण्ठ[6] इत्यादेशो भवति ॥ गण्ठइ । गण्ठी ॥

**मन्थेर्घुसल-विरोलौ ॥ १२१ ॥**

मन्थेर्घुसल विरोल इत्यादेशौ[7] वा भवतः ॥ घुसलइ । विरोलइ । मन्थइ ॥

**ह्लादेरवअच्छः[8] ॥ १२२ ॥**

ह्लादतेर्ण्यन्तस्याण्यन्तस्य च अवअच्छं[9] इत्यादेशो भवति ॥ अवअच्छइ । ह्लादते । ह्लादयति वा ॥ इकारो ण्यन्तस्यापि परिग्रहार्थः ॥

**नेः सदो मज्जः ॥ १२३ ॥**

निपूर्वस्य सदो[11] मज्ज इत्यादेशो भवति ॥ अत्ता[10] एत्थ णुमज्जइ ॥

**छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः ॥ १२४ ॥**

छिदेरेते षडादेशा वा भवन्ति ॥ दुहावइ । णिच्छल्लइ । णिज्झोडइ । णिव्वरइ । णिल्लूरइ । लूरइ । पक्षे । छिन्दइ ॥

---

१ B °णिल्लुक्क°. २ B °क्कोच्छूराः. ३ B णिल्लुक्कइ. ४ B उच्छूरइ. ५ B घूर्णेर्घु°. ६ B ग्रंथो गं°. ७ B °शौ म. ८ B °इ ॥ ल्हा°. ९ B ल्हा°. १० B °अत्थ°. ११ B सदेर्म°.

**आङा ओअन्दोद्दालौ ॥ १२५ ॥**

आङा युक्तस्य छिदेरोअन्द उद्दाल इत्यादेशौ वा भवतः ॥ ओअन्दइ । उद्दालइ । अच्छिन्दइ[१] ॥

**मृदो मल-मढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः ॥ १२६ ॥**

मृद्नातेरेते सप्तादेशा[२] भवन्ति ॥ मलइ । मढइ । परिहट्टइ । खड्डइ । चड्डइ । मड्डइ । पन्नाडइ ॥

**स्पन्देश्चुलुचुलः ॥ १२७ ॥**

स्पन्देश्चुलुचुल इत्यादेशो वा भवति ॥ चुलुचुलइ । फन्दइ ॥

**निरः पदेर्वलः ॥ १२८ ॥**

निर्पूर्वस्य पदेर्वल इत्यादेशो वा भवति ॥ निव्वलइ । निप्पज्जइ[३] ॥

**विसंवदेर्विअट्ट-विलोट्ट-फंसाः ॥ १२९ ॥**

विसंपूर्वस्य वदेरेते त्रय आदेशा वा भवन्ति ॥ विअट्टइ । विलोट्टइ । फंसइ । विसंवयइ ॥

**शदो झड-पक्खोडौ ॥ १३० ॥**

शीयतेरेतावादेशौ भवतः ॥ झडइ[४] । पक्खोडइ[५] ॥

**आक्रन्देर्णीहरः ॥ १३१ ॥**

आक्रन्देर्णीहर इत्यादेशो वा भवति ॥ णीहरइ । अक्कन्दइ ॥

**खिदेर्जूर-विसूरौ ॥ १३२ ॥**

खिदेरेतावादेशौ वा भवतः ॥ जूरइ । विसूरइ । खिज्जइ ॥

**रुधेरुत्थङ्घः ॥ १३३ ॥**

रुधेरुत्थङ्घ[६] इत्यादेशो वा भवति ॥ उत्थङ्घइ[७] । रुन्धइ ॥

---

१ B आच्छिंदइ. २ A °शा वा भ°. ३ A निप्फ°. ४ B झ्झड°. ५ B °इ ॥ खिदे°. ६ P °रुन्त°. ७ P उन्त°.

**निषेधेर्हक्कः ॥ १३४ ॥**

निषेधतेर्हक्क इत्यादेशो वा भवति ॥ हक्कइ । निसेहइ ॥

**क्रुधेर्जूरः ॥ १३५ ॥**

क्रुधेर्जूर इत्यादेशो वा भवति ॥ जूरइ । कुज्झइ ॥

**जनो जा-जम्मौ ॥ १३६ ॥**

जायतेर्जा जम्म इत्यादेशौ[1] भवतः ॥ जाअइ । जम्मइ ॥

**तनेस्तड-तड्ड-तड्डव-विरल्लाः ॥ १३७ ॥**

तनेरेते चत्वार आदेशा वा भवन्ति ॥ तडइ । तड्डइ । तड्डवइ । विरल्लइ । तणइ ॥

**तृपस्थिप्पः ॥ १३८ ॥**

तृप्यते[2]स्थिप्प इत्यादेशो भवति ॥ थिप्पइ ॥

**उपसर्पेरल्लिअः ॥ १३९ ॥**

उपपूर्वस्य सृपेः कृतगुणस्य अल्लिअ इत्यादेशो वा भवति ॥ अल्लिअइ । उवसप्पइ ॥

**संतपेर्झङ्खः[3] ॥ १४० ॥**

संतपे[4]र्झङ्ख[5] इत्यादेशो वा भवति ॥ झङ्खइ[6] । पक्षे । संतप्पइ ॥

**व्यापेरोअग्गः ॥ १४१ ॥**

व्याप्नोतेरोअग्ग इत्यादेशो वा भवति ॥ ओअग्गइ । वावेइ ॥

**समापेः समाणः ॥ १४२ ॥**

समाप्नोतेः समाण इत्यादेशो वा भवति ॥ समाणइ । समावेइ ॥

---

१ B °शौ वा भ°. २ A तेः स्थि°. ३ B °पेर्ङ्खः. ४ P B °तप्यतेर्झ°. ५ B °पेर्ङ्ख°. ६ B ङंखइ.

**क्षिपेर्गलत्थाड्डक्ख-सोल्ल-पेल्ल-णोल्ल-छुह-हुल-परी-घत्ताः॥१४३॥**

क्षिपेरेते नवादेशा वा भवन्ति ॥ गलत्थइ । अड्डक्खइ । सोल्लइ । पेल्लइ । णोल्लइ । ह्रस्वत्वे[1] तु णुल्लइ । छुहइ । हुलइ । परीइ । घत्तइ । खिवइ ॥

**उत्क्षिपेर्गुल[2]गुञ्छोत्थङ्घाल्लत्थो[3]ब्भुत्तोस्सिक्क[4]-हक्खुवाः[5] ॥१४४॥**

उत्पूर्वस्य क्षिपेरेते षडादेशा वा भवन्ति ॥ गुल[6]गुञ्छइ । उत्थङ्घइ । अल्लत्थइ । उब्भुत्तइ । उस्सिक्कइ । हक्खुँवइ[7] । उक्खिवइ ॥

**आक्षिपेर्णीरवः ॥ १४५ ॥**

आङ्पूर्वस्य क्षिपेर्णीरव इत्यादेशो वा भवति ॥ णीरवइ । अक्खिवइ ॥

**स्वपेः कमवस-लिस-लोट्टाः ॥ १४६ ॥**

स्वपेरेते त्रय आदेशा वा भवन्ति ॥ कमवसइ[8] । लिसइ । लोट्टइ । सुअइ ॥

**वेपेरायम्बायज्झौ ॥ १४७ ॥**

वेपेरायम्ब आयज्झ इत्यादेशौ वा भवतः ॥ आयम्बइ । आयज्झइ । वेवइ ॥

**विलपेर्झङ्ख-वडवडौ ॥ १४८ ॥**

विलपेर्झङ्ख वडवड इत्यादेशौ वा भवतः ॥ झङ्खइ । वडवडइ । विलवइ ॥

**लिपो लिम्पः ॥ १४९ ॥**

लिम्पतेर्[9]लिम्प इत्यादेशो भवति ॥ लिम्पइ ॥

**गुप्येर्[10]विर-णडौ ॥ १५० ॥**

गुप्यतेरेतावादेशौ वा भवतः ॥ विरइ । णडइ । पक्षे । गुप्पइ ॥

---

१ P B °खे णु°. २ A गुलगुं°. ३ P °ङ्घालत्थो°. ४ A °त्तोसिक्कहक्खुवः. ५ B °हक्खुप्पाः. ६ A B गुलगुं°. ७ B हक्खुप्पइ. ८ B कमठस°. ९ B लिप°. १० P गुपेर्वि°.

**क्रपोवहो[1] णिः ॥ १५१ ॥**

क्रपेः[2] अवह इत्यादेशो ण्यन्तो भवति ॥ अवहावेइ । कृपां करोतीत्यर्थः ॥

**प्रदीपेस्तेअव-सन्दुम[3]-सन्धुक्काब्भुत्ताः ॥ १५२ ॥**

प्रदीप्यतेरेते चत्वार आदेशा वा भवन्ति ॥ तेअवइ । सन्दुमइ । सन्धुक्कइ । अब्भुत्तइ । पलीवइ ॥

**लुभेः संभावः ॥ १५३ ॥**

लुभ्यतेः संभाव इत्यादेशो वा भवति ॥ संभावइ । लुब्भइ ॥

**क्षुभेः खउर-पड्डुहौ[4] ॥ १५४ ॥**

क्षुभेः खउर पड्डुह[5] इत्यादेशौ वा भवतः ॥ खउरइ । पड्डुहइ[6] । खुब्भइ ॥

**आङो रभे रम्भ-ढवौ ॥ १५५ ॥**

आङः परस्य रभे रम्भ ढव इत्यादेशौ वा भवतः ॥ आरम्भइ । आढवइ । आरभइ ॥

**उपालम्भेर्झङ्ख-पच्चार-वेलवाः ॥ १५६ ॥**

उपालम्भेरेते त्रय आदेशा वा भवन्ति ॥ झङ्खइ । पच्चारइ । वेलवइ । उवालम्भइ[7] ॥

**अवेर्जृम्भो जम्भा ॥ १५७ ॥**

जृम्भेर्जम्भा[8] इत्यादेशो भवति वेस्तु न भवति ॥ जम्भाइ । जम्भाअइ ॥ अवेरिति किम् । केलि-पसरो विअम्भइ ॥

---

१ B कृपोऽव°. २ B कृपेः. ३ A °संदुम°. ४ B °पड्डहौ. ५ B पड्डह. ६ । ड्डहइ. ७ A उपाल°. ८ B जंभेर्ज°.

**भाराक्रान्ते नमेर्णिसुढः ॥ १५८ ॥**

भाराक्रान्ते कर्तरि नमेर्णिसुढ इत्यादेशो भवति ॥ णिसुढई । पक्षे । णवइ । भाराक्रान्तो नमतीत्यर्थः ॥

**विश्रमेर्णिव्वा ॥ १५९ ॥**

विश्राम्यतेर्णिव्वा इत्यादेशो वा भवति ॥ णिव्वाइ । वीसमइ ॥

**आक्रमे[2]रोहावो[3]त्थारच्छुन्दाः ॥ १६० ॥**

आक्रम[4]तेरेते त्रय आदेशा वा भवन्ति ॥ ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ॥

**भ्रमेष्टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म[6]-भम्मड-भमड-भमाड-तल-अण्ट-[7]झंण्ट-झम्प-भुम-गुम-फुम-फुस-ढुम-ढुस-परी-पराः॥१६१॥**

भ्रमेरेतेष्टादशादेशा वा भवन्ति ॥ टिरिटिल्लइ । ढुण्ढुल्लइ । ढण्ढल्लइ । चक्कम्मइ । [8]भम्मडइ । भमडइ । भमाडइ । तलअण्टइ । [9]झंण्टइ । झम्पइ । भुमइ । गुमइ । फुमइ । फुसइ । ढुमइ । ढुसइ । परीइ । परइ । भमइ ॥

**गमेरई-अइच्छाणुवज्जा[10]वज्जसोक्कुसाक्कुस-पच्चड्ड-पच्छन्द-णिम्मह-णी-णीण-णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवहावसेहावहराः ॥ १६२ ॥**

गमेरेते एकविंशतिरादेशा वा भवन्ति ॥ अईइ । अइच्छइ । अणुवज्जइ । अव[11]ज्जसइ । उक्कुसइ । अक्कुसइ । पच्चड्डइ । पच्छन्दइ । णिम्महइ । णीइ । णीणइ । णीलुक्कइ । पदअइ । रम्भइ । परिअल्लइ । वोलइ । परिअलइ । णिरिणासइ । णिवहइ । अवसेहइ । अवहरइ ।

---

१ A B ड़ । भा°. २ B आक्रामे°. ३ B °वोत्कार°. ४ B आक्रमे°. ५ B उत्कार°. ६ B °ममभमडभम्माडभमाडत°. ७ A °झंट°. ८ B भमडइ । भमाडइ. ९ A झंटइ. १० B °वज्जोक्कुसा°. ११ B अवम्मज्जइ.

पक्षे । गच्छइ ॥ हम्मइ । णिहम्मइ । णीहम्मइ । आहम्मइ । पहम्मइ इत्येते तु हम्म गतावित्यस्यैव भविष्यन्ति ॥

**आङा अहिपच्चुअः ॥ १६३ ॥**

आङा सहितस्य गमेः अहिपच्चुअ इत्यादेशो वा भवति ॥ अहिपच्चुअइ । पक्षे । आगच्छइ ॥

**समा[1] अब्भिडः ॥ १६४ ॥**

समा युक्तस्य गमेः अब्भिड इत्यादेशो वा भवति ॥ अब्भिडइ । संगच्छइ ॥

**अभ्याङोम्मत्थः ॥ १६५ ॥**

अभ्याङ्भ्यां युक्तस्य गमेः उम्मत्थ इत्यादेशो वा भवति ॥ उम्मत्थइ । अब्भागच्छइ । अभिमुखमागच्छतीत्यर्थः ॥

**प्रत्याङा पलोट्टः ॥ १६६ ॥**

प्रत्याङ्भ्यां युक्तस्य गमेः पलोट्ट इत्यादेशो वा भवति ॥ पलोट्टइ । पच्चागच्छइ ॥

**शमेः पडिसा-परिसामौ ॥ १६७ ॥**

शमेरेतावादेशौ वा भवतः ॥ पडिसाइ । परिसामइ । समइ ॥

**रमेः संखुड्ड-खेड्डोब्भाव-किलिकिञ्च-कोट्टुम-मोट्टाय-णीसर-वेल्लाः ॥ १६८ ॥**

रमतेरेतेष्टादेशा वा भवन्ति ॥ संखुड्डइ । खेड्डइ । उब्भावइ । किलिकिञ्चइ । कोट्टुमइ । मोट्टायइ । णीसरइ । वेल्लइ । रमइ ॥

---

[1] A °माऽब्भिडः.

पूरेरग्घाडाग्घवोद्धुमाङ्गुमाहिरेमाः ॥ १६९ ॥[1]

पूरेरेते पञ्चादेशा वा भवन्ति ॥ अग्घाडइ । अग्घवइ[2] । उद्धुमाइ[3] । अङ्गुमइ । अहिरेमइ । पूरइ ॥

त्वरस्तुवर-जअडौ ॥ १७० ॥

त्वरतेरेतावादेशौ भवतः ॥ तुवरइ । जअडइ । तुवरन्तो । जअडन्तो ।

त्यादिशत्रोस्तूरः ॥ १७१ ॥

त्वरतेस्त्यादौ शतरि च तूर इत्यादेशो भवति ॥ तूरइ । तूरन्तो ॥

तुरोत्यादौ ॥ १७२ ॥

त्वरोत्यादौ तुर आदेशो भवति ॥ तुरिओ । तुरन्तो ॥

क्षरः खिर-झर[4]-पज्झर-पच्चड-णिच्चल[5]-णिट्टुआः[6] ॥ १७३ ॥

क्षरेरेते षड आदेशा भवन्ति ॥ खिरइ । झरइ[4] । पज्झरइ । पच्चडइ । णिच्चलइ[5] । णिट्टुअइ[6] ॥

उच्छल उत्थल्लः ॥ १७४ ॥[7]

उच्छलतेरुत्थल्ल इत्यादेशो भवति ॥ उत्थल्लइ ॥

विगलेस्थिप्प-णिट्टुहौ ॥ १७५ ॥[8]

विगलतेरेतावादेशौ वा भवतः ॥ थिप्पइ । णिट्टुहइ । विगलइ ॥

दलि-वल्योर्विसट्ट-वम्फौ ॥ १७६ ॥

दलेर्वलेश्च यथासंख्यं विसट्ट वम्फ इत्यादेशौ वा भवतः ॥ विसट्टइ । वम्फइ । पक्षे । दलइ । वलइ ॥

---

१ B °डोग्घ°. २ B उग्घव°. ३ B उद्धूमइ. ४ B °ज्झर°. ५ B °च्चल°. ६ B °ट्ठ°. ७ B °च्छल्ल°. ८ B °ट्ठ°.

**भ्रंशेः फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्लाः ॥ १७७ ॥**

भ्रंशेरेते षडादेशा वा भवन्ति ॥ फिडइ । फिट्टइ । फुडइ । फुट्टइ । चुक्कइ । भुल्लइ । पक्षे । भंसइ ॥

**नशेर्णि[1]रणास-णिवहावसेह-पडिसा-सेहावहराः ॥ १७८ ॥**

नशेरेते षडादेशा वा भवन्ति ॥ णिर[2]णासइ । णिवहइ । अवसेहइ । पडिसाइ । सेहइ । अवहरइ । पक्षे । नस्सइ ॥

**अवात्काशो वासः ॥ १७९ ॥**

अवात्परस्य काशो वास इत्यादेशो भवति ॥ ओवासइ ॥

**संदिशेरप्पाहः ॥ १८० ॥**

संदिशतेरप्पाह इत्यादेशो वा भवति ॥ अप्पाहइ । संदिसइ ॥

**दृशो निअच्छ-पेच्छावयच्छावयज्झ-वज्ज[3]-सव्वव-देक्खौअक्खा-वक्खाव[4]अक्ख-पुलोअ[5]-पुलअ-निआवआस-पासाः॥१८१॥**

दृशेरेते पञ्चदशादेशा भवन्ति[6] ॥ निअच्छइ । पेच्छइ । अवयच्छइ । अवयज्झइ । वज्जइ[7] । सव्ववइ[8] । देक्खइ । ओअक्खइ । अवक्खइ[9] । अवअक्खइ । पुलोएइ । पुलएइ[10] । निअइ । अवआसइ । पासइ ॥ निज्झाअइ इति तु निध्यायतेः[11] स्वरादत्यन्ते भविष्यति ॥

**स्पृशः फास-फंस-फरिस-छिव-छिहालुङ्खालिहाः ॥ १८२ ॥**

स्पृशतेरेते सप्त आदेशा भवन्ति ॥ फासइ । फंसइ । फरिसइ । छिवइ । छिहइ । आलुङ्खइ । आलिहइ ॥

---

१ B णिरिणा°. २ A B णिरिणा°. ३ B °चज्जसच्चवदे°. ४ B °चक्खा°. ५ B °पुलोए°. ६ B °न्ति वा. ७ B चज्ज°. ८ B सच्च°. ९ B अच°. १० B °अइ. ११ B निपूर्वस्य ध्यायतेः स्वरादंत्यतेर्भ°.

## प्रविशे रिअः ॥ १८३ ॥

प्रविशेः रिअ इत्यादेशो वा भवति ॥ रिअइ । पविसइ ॥

## प्रान्मृश-मुषोर्म्हुसः ॥ १८४ ॥

प्रात्परयोर्मृशतिमुष्णात्योर्म्हुस इत्यादेशो भवति ॥ पम्हुसइ । प्रमृशति । प्रमुष्णाति[1] वा ॥

## पिषेर्णिवह[2]-णिरिणास-णिरिणज्ज[3]-रोञ्च-चड्डाः ॥ १८५ ॥

पिषेरेते पञ्चादेशा भवन्ति वा ॥ णिवहइ[2] । णिरिणासइ । णिरिणज्जइ[3] । रोञ्चइ । चड्डइ । पक्षे । पीसइ ॥

## भषेर्भुक्कः ॥ १८६ ॥

भषेर्भुक्क इत्यादेशो वा भवति ॥ भुक्कइ । भसइ ॥

## कृषेः कड्ढ[4]-साअड्ढा[5]ञ्चाणच्छायञ्छाइञ्छाः ॥ १८७ ॥

कृषेरेते षडादेशा वा भवन्ति ॥ कड्ढइ[4] । साअड्ढइ[6] । अञ्चइ । अणच्छइ । अयञ्छइ । आइञ्छइ । पक्षे । करिसइ ॥

## असावक्खोडः ॥ १८८ ॥

असिविषयस्य कृषेरक्खोड इत्यादेशो भवति ॥ अक्खोडइ[7] । असिं कोशात्कर्षतीत्यर्थः ॥

## गवेषेर्ढुण्ढुल्ल-ढण्ढोल-गमेस-घत्ताः ॥ १८९ ॥

गवेषेरेते चत्वार आदेशा वा भवन्ति ॥ ढुण्ढुल्लइ । ढण्ढोलइ । गमेसइ । घत्तइ । गवेसइ ॥

---

१ B °मुष्णाति ॥. २ B °णिव्वह°. ३ B °रिणिज्ज°. ४ B कड्ढ°. ५ B °साअड्ढा°. ६ B साअड्ढइ. ७ B °क्खोडइ.

**श्लिषेः सामग्गावयास-परिअन्ताः[1] ॥ १९० ॥**

श्लिष्यतेरेते[2] त्रय आदेशा वा भवन्ति ॥ सामग्गइ । अवयासइ । परिअन्तइ[3] । सिलेसइ ॥

**म्रक्षेश्चोप्पडः[4] ॥ १९१ ॥**

म्रक्षेश्चोप्पड इत्यादेशो वा भवति ॥ चोप्पडइ । मक्खइ ॥

**काङ्क्षेराहाहिलङ्घाहिलङ्ख-वच्च-वम्फ-मह-सिह-विलुम्पाः[5] ॥ १९२ ॥**

काङ्क्षतेरेतेऽष्टादेशा वा भवन्ति ॥ आहइ[6] । अहिलङ्घइ । अहिलङ्खइ । वच्चइ । वम्फइ । महइ । सिहइ । विलुम्पइ[7] । कङ्खइ ॥

**प्रतीक्षेः सामय-विहीर-विरमालाः ॥ १९३ ॥**

प्रतीक्षेरेते त्रय आदेशा वा भवन्ति ॥ सामयइ । विहीरइ । विरमालइ । पडिक्खइ ॥

**तक्षेस्तच्छ-चच्छ-रम्प-रम्फाः[8] ॥ १९४ ॥**

तक्षेरेते चत्वार आदेशा वा भवन्ति ॥ तच्छइ । चच्छइ । रम्पइ । रम्फइ । तक्खइ ॥

**विकसेः कोआस-वोसट्टौ ॥ १९५ ॥**

विकसेरेतावादेशौ वा भवतः ॥ कोआसइ । वोसट्टइ । विअसइ ॥

**हसेर्गुञ्जः ॥ १९६ ॥**

हसेर्गुञ्ज इत्यादेशो वा भवति ॥ गुञ्जइ । हसइ ॥

**स्रंसेर्ल्हस-डिम्भौ ॥ १९७ ॥**

स्रंसेरेतावादेशौ वा भवतः ॥ ल्हसइ । परिल्हसइ[9] सलिल-वसणं । डिम्भइ । संसइ ॥

---

१ B °अन्ताः. २ A श्लिषेरे°. ३ B °अन्तइ. ४ A मृक्षेश्चो°. ५ A °लुम्फाः. ६ A आहिइ. B आहाइ. ७ A °लुंफइ. ८ A °रंफा ॥ ९ B °इ । सलिलवसणं डिम्भइ.

त्रसेर्डर-बोज्ज-वज्जाः ॥ १९८ ॥

त्रसेरेते त्रय आदेशा वा भवन्ति ॥ डरइ । बोज्जइ । वज्जइ । तसइ ॥

न्यसो णिम-णुमौ ॥ १९९ ॥

न्यस्यतेरेतावादेशौ भवतः ॥ णिमइ । णुमइ ॥

पर्यसः पलोट्ट-पल्लट्ट-पल्हत्थाः ॥ २०० ॥

पर्यस्यतेरेते त्रय आदेशा भवन्ति ॥ पलोट्टइ । पल्लट्टइ । पल्हत्थइ ॥

निःश्वसेर्झङ्खः ॥ २०१ ॥

निःश्वसेर्झङ्ख इत्यादेशो वा भवति ॥ झङ्खइ । नीससइ ॥

उल्लसेरूसलोसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्लारोआः ॥२०२॥

उल्लसेरेते षडादेशा वा भवन्ति ॥ ऊसलइ । ऊसुम्भइ । णिल्लसइ । पुलआअइ । गुञ्जोल्लइ । ह्रस्वत्वे तु । गुञ्जुल्लइ । आरोअइ । उल्लसइ ॥

भासेर्भिसः ॥ २०३ ॥

भासेर्भिस इत्यादेशो वा भवति ॥ भिसइ । भासइ ॥

ग्रसेर्घिसः ॥ २०४ ॥

ग्रसेर्घिस इत्यादेशो वा भवति ॥ घिसइ । गसइ ॥

अवाद्गाहेर्वाहः ॥ २०५ ॥

अवात्परस्य गाहेर्वाह इत्यादेशो वा भवति ॥ ओवाहइ[1] । ओगाहइ[2] ॥

आरुहेश्चड-वलग्गौ ॥ २०६ ॥

आरुहेरेतावादेशौ वा भवतः ॥ चडइ । वलग्गइ । आरुहइ ॥

मुहेर्गुम्म-गुम्मडौ ॥ २०७ ॥

मुहेरेतावादेशौ वा भवतः ॥ गुम्मइ । गुम्मडइ । मुज्झइ ॥

---

१ B उवा°. २ B उगा°.

**दहेरहिऊलालुङ्खौ ॥ २०८ ॥**

दहेरेतावादेशौ वा भवतः ॥ अहिऊलइ । आलुङ्खइ । डहइ ॥

**ग्रहो वल-गेण्ह-हर-पङ्ग-निरुवाराहिपच्चुआः ॥ २०९ ॥**

ग्रहेरेते षडादेशा भवन्ति ॥ वलइ । गेण्हइ । हरइ । पङ्गइ । निरुवारइ । अहिपच्चु[1]अइ ॥

**क्त्वा-तुम्-तव्येषु घेत् ॥ २१० ॥**

ग्रहे[2]ः क्त्वातुमुतव्येषु घेत् इत्यादेशो भवति ॥ क्त्वा । घेत्तूण । घेत्तु[3]आण ॥ क्वचिन्न भवति । गेण्हिअ ॥ तुम् । घेत्तुं ॥ तव्य । घेत्तव्वं ॥

**वचो वोत् ॥ २११ ॥**

वचे[4]र्वोत् इत्यादेशो भवति क्त्वातुमुतव्येषु ॥ वोत्तूण । वोत्तुं । वोत्तव्वं ॥

**रु[5]द-भुज-मुचां तो[6]न्त्यस्य ॥ २१२ ॥**

एषामन्त्यस्य क्त्वातुमुतव्येषु[7] तो भवति ॥ रोत्तूण । रोत्तुं । रोत्तव्वं ॥ भोत्तूण । भोत्तुं । भोत्तव्वं ॥ मोत्तूण । मोत्तुं । मोत्तव्वं ॥

**दृशस्तेन ट्ठः[8] ॥ २१३ ॥**

दृशोन्त्यस्य तकारेण सह द्विरुक्तठकारो भवति ॥ दट्ठूण । दट्ठुं । दट्ठव्वं ॥

**आ[9]ः कृगो भूत-भविष्यंतो[10]श्च ॥ २१४ ॥**

कृगोन्त्यस्य आ इत्यादेशो भवति भूतभविष्यत्कालयोश्चकारात् क्त्वातुमुतव्येषु च ॥ काहीअ । अकार्षीत् । अकरोत् । चकार वा ॥ काहिइ । करिष्यति । कर्ता वा ॥ क्त्वा । काऊण ॥ तुम् । काउं ॥ तव्य । कायव्वं ॥

---

१ B °च्चुइ. २ B ग्रहेः. ३ A B घेत्तूआण. ४ A °वोंदादे°. ५ P क्षुद°. ६ B त्तों°. ७ B °पु परतः त्तो. ८ A ठः. ९ P आ कृ°. १० A °ष्यतेश्च.

**गमिष्यमासां छः ॥ २१५ ॥**

एषामन्त्यस्य[1] छो भवति ॥ गच्छइ । इच्छइ । जच्छइ । अच्छइ ॥

**छिदि-भिदो न्दः ॥ २१६ ॥**

अनयोरन्त्यस्य नकाराक्रान्तो दकारो भवति ॥ छिन्दइ । भिन्दइ ॥

**युध-बुध-गृध-क्रुध-सिध-मुहां ज्झः ॥ २१७ ॥**

एषामन्त्यस्य द्विरुक्तो झो भवति ॥ जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ॥

**रुधो न्ध-म्भौ च ॥ २१८ ॥**

रुधोन्त्यस्य न्ध म्भ इत्येतौ चकारात् ज्झश्च भवति[2] ॥ रुन्धइ । रुम्भइ । रुज्झइ ॥

**सद-पतोर्डः ॥ २१९ ॥**

अनयोरन्त्यस्य[3] डो भवति ॥ सडइ । पडइ ॥

**कथ-वर्धां ढः ॥ २२० ॥**

अनयोरन्त्यस्य[3] ढो भवति ॥ कढइ । वड्ढइ पवय-कलयलो ॥ परिअड्ढइ लायण्णं ॥ बहुवचनाद् वृधेः कृतगुणस्य वर्धेश्चाविशेषेण ग्रहणम् ॥

**वेष्टः ॥ २२१ ॥**[4]

वेष्ट वेष्टने इत्यस्य धातोः कगटड[5] इत्यादिना [२.७७.] षलोपेन्त्यस्य ढो भवति ॥ वेढइ । वेढिज्जइ ॥

**समो ल्लः ॥ २२२ ॥**

संपूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति ॥ संवेल्लइ ॥

**वोदः ॥ २२३ ॥**

उदः परस्य वेष्टतेरन्त्यस्य[6][3] ल्लो वा भवति ॥ उव्वेल्लइ उव्वेढइ ॥

---

१ A °मंतस्य. २ P भवन्ति. ३ A °रंतस्य. ४ A वेष्टः. B वेष्टेः. ५ A विष्टि. ६ B वेष्टेर°.

**स्विदां ज्जः ॥ २२४ ॥**

स्विदिप्रकाराणामन्त्यस्य[1] द्विरुक्तो जो भवति ॥ सव्वङ्ग-सिज्जिरीए । संपज्जइ । खिज्जइ ॥ बहुवचनं प्रयोगानुसरणार्थम् ॥

**व्रज-नृत-मदां च्चः ॥ २२५ ॥**

एषामन्त्यस्य[1] द्विरुक्तश्चो भवति ॥ वच्चइ । नच्चइ । मच्चइ ॥

**रुद्-नमोर्वः ॥ २२६ ॥**

अनयोरन्त्यस्य[2] वो भवति ॥ रुवइ । रोवइ । नवइ[3] ॥

**उद्विजः ॥ २२७ ॥**

उद्विजतेरन्त्यस्य[2] वो भवति ॥ उव्विवइ । उव्वेवो ॥

**खाद-धावोर्लुक् ॥ २२८ ॥**

अनयोरन्त्यस्य[2] लुग् भवति ॥ खाइ । खाअइ । खाहिइ । खाउ[4] । धाइ[5] । धाहिइ । धाउ[6] ॥ बहुलाधिकाराद्वर्तमानाभविष्यद्विध्याद्येकवचन एव भवति । तेनेह न भवति । खादन्ति । धावन्ति ॥ क्वचिन्न भवति । धावइ पुरओ ॥

**सृजो रः ॥ २२९ ॥**

सृजो धातोरन्त्यस्य[2] रो भवति ॥ निसिरइ । वोसिरइ । वोसिरामि ॥

**शकादीनां द्वित्वम् ॥ २३० ॥**

शकादीनामन्त्यस्य[2] द्वित्वं भवति ॥ शक् । सक्कइ ॥ जिम् । जिम्मइ ॥ लग् । लग्गइ ॥ मग् । मग्गइ ॥ कुप् । कुप्पइ ॥ नश् । नस्सइ ॥ अट् । परिअट्टइ ॥ लुट् । पलोट्टइ ॥ तुट् । तुट्टइ ॥ नट् । नट्टइ ॥ सिव्[7] । सिव्वइ । इत्यादि ॥

---

१ A °मंतस्य. २ A °रंतस्य. ३ P णवइ. ४ B खाओ. ५ B °इ । धाअइ । धाहि°. ६ B धाओ. ७ A B सिच् । सिच्चइ.

**स्फुटि-चलेः ॥ २३१ ॥**

अनयोरन्त्यस्य द्वित्वं वा भवति ॥ फुट्टइ फुडइ । चल्लइ चलइ ॥

**प्रादेर्मीलेः[1] ॥ २३२ ॥**

प्रादेः परस्य मीलेरन्त्यस्य द्वित्वं वा भवति ॥ पमिल्लइ पमीलइ । निमिल्लइ निमीलइ । संमिल्लइ संमीलइ । उम्मिल्लइ उम्मीलइ[2] ॥ प्रादेरिति किम् । मीलइ ॥

**उवर्णस्यावः ॥ २३३ ॥**

धातोरन्त्यस्योवर्णस्य अवादेशो[3] भवति ॥ न्हुङ् । निण्हवइ[4] ॥ हु । निहवइ ॥ च्युङ् । चवइ ॥ रु । रवइ ॥ कु । कवइ ॥ सू । सवइ । पसवइ ॥

**ऋवर्णस्यारः ॥ २३४ ॥**

धातोरन्त्यस्य[5] ऋवर्णस्य अरादेशो भवति ॥ करइ । धरइ । मरइ[6] । वरइ । सरइ । हरइ । तरइ । जरइ ॥

**वृषादीनामरिः ॥ २३५ ॥**

वृष इत्येवंप्रकाराणां धातूनाम् ऋवर्णस्य अरिः इत्यादेशो भवति ॥ वृष् । वरिसइ ॥ कृष् । करिसइ[7] ॥ मृष् । मरिसइ ॥ हृष् । हरिसइ ॥ येषामरिरादेशो दृश्यते ते वृषादयः ॥

**रुषादीनां दीर्घः ॥ २३६ ॥**

रुष इत्येवंप्रकाराणां धातूनां स्वरस्य दीर्घो भवति ॥ रूसइ । तूसइ । सूसइ । दूसइ । पूसइ । सीसइ । इत्यादि ॥

**युवर्णस्य गुणः ॥ २३७ ॥**

धातोरिवर्णस्योवर्णस्य च क्ङित्यपि गुणो भवति ॥ जेऊण । नेऊण ।

---

१ A °र्मीलः. २ A उमीलइ. ३ B °शो वा भ°. ४ P B °इ । नि°. ५ A °रंतस्य. ६ A °इ । स°. ७ B °इ । दृषू । दरिसइ । मृ°.

नेइ । नेन्ति । उड्डेइ । उड्डेन्ति । मोत्तूण । सोऊण ॥ क्वचिन्न भवति । नीओ । उड्डीणो ॥

**स्वराणां स्वराः ॥ २३८ ॥**

धातुषु स्वराणां स्थाने स्वरा बहुलं भवन्ति ॥ हवइ । हिवइ ॥ चिणइ । चुणइ ॥ सद्दहणं । सद्दहाणं ॥ धावइ । धुवइ ॥ रुवइ । रोवइ ॥ क्वचिन्नित्यम् । देइ । लेइ । विहेइ । नासइ ॥ आर्षे । बेमि ॥

**व्यञ्जनाददन्ते ॥ २३९ ॥**

व्यञ्जनान्ताद्धातोरन्ते अकारो भवति ॥ भमइ[1] । हसइ । कुणइ । चुम्बइ । भणइ । उवसमइ । पावइ । सिञ्चइ । रुन्धइ । मुसइ । हरइ । करइ ॥ शबादीनां[2] च प्रायः प्रयोगो नास्ति ॥

**स्वरादनतो वा ॥ २४० ॥**

अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति ॥ पाइ पाअइ । धाइ धाअइ । जाइ जाअइ । झाइ झाअइ । जम्भाइ जम्भाअइ । उव्वाइ उव्वाअइ । मिलाइ मिलाअइ । विक्केइ विक्केअइ । होऊण होइऊण[3] ॥ अनत इति किम् । चिइच्छइ । दुगुच्छइ ॥

**चि-जि-श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च ॥ २४१ ॥**

च्यादीनां धातूनामन्ते णकारागमो भवति एषां स्वरस्य च[5] ह्रस्वो भवति ॥ चि । चिणइ ॥ जि । जिणइ ॥ श्रु[4] । सुणइ ॥ हु । हुणइ ॥ स्तु[6] । थुणइ ॥ लू । लुणइ ॥ पू । पुणइ ॥ धूग् । धुणइ ॥ बहुलाधिकारात्क्वचिद्विकल्पः । उच्चिणइ । उच्चेइ ॥ जेऊण । जिणिऊण ॥ जयइ । जिणइ ॥ सोऊण । सुणिऊण ॥

**न वा कर्म-भावे व्वः क्यस्य च लुक् ॥ २४२ ॥**

च्यादीनां कर्मणि भावे[7] च वर्तमानानामन्ते द्विरुक्तो वकारागमो

---

१ A °इ । कणइ । चुं°. २ B शवा°. ३ A P होअऊण. ४ B °ए°. ५ P B च दीर्घस्य ह्र°. ६ B ए. ७ B °वे वर्त°.

वा भवति तत्सन्नियोगे च क्यस्य लुक् ॥ चिव्वइ चिणिज्जइ । जिव्वइ जिणिज्जइ । सुव्वइ सुणिज्जइ । हुव्वइ हुणिज्जइ । थुव्वइ थुणिज्जइ । लुव्वइ लुणिज्जइ । पुव्वइ पुणिज्जइ । धुव्वइ धुणिज्जइ ॥ एवं भविष्यति । चिव्विहिइ । इत्यादि ॥

**म्मश्चेः ॥ २४३ ॥**

चिगः कर्मणि भावे च अन्ते संयुक्तो मो वा भवति तत्सन्नियोगे[1] क्यस्य च लुक् ॥ चिम्मइ । चिव्वइ । चिण्णिज्जइ ॥ भविष्यति । चिम्मिहिइ । चिव्विहिइ । चिणिहिइ ॥

**हन्खनोन्त्यस्य[2] ॥ २४४ ॥**

[3]अनयोः कर्मभावेन्त्यस्य द्विरुक्तो मो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ हम्मइ हणिज्जइ । खम्मइ खणिज्जइ ॥ भविष्यति । हम्मिहिइ हणिहिइ । खम्मिहिइ खणिहिइ ॥ बहुलाधिकाराद्धन्तेः कर्तर्यपि ॥ हम्मइ । हन्तीत्यर्थः ॥ क्वचिन्न भवति ॥ हन्तव्वं । हन्तूर्णं । हओ ॥

**ब्भो दुह-लिह-वह-रुधामुचातः ॥ २४५ ॥**

दुहादीनाम[5]न्त्यस्य कर्मभावे द्विरुक्तो [6]भो वा भवति तत्सन्नियोगे क्यस्य च लुक् वहेरकारस्य च उकारः ॥ दुब्भइ दुहिज्जइ । लिब्भइ । लिहिज्जइ । वुब्भइ वहिज्जइ । [7]रुंब्भइ रुन्धिज्जइ । भविष्यति । दुब्भिहिइ दुहिहिइ । इत्यादि ॥

**दहो ज्झः ॥ २४६ ॥**

दहो[8]न्त्यस्य कर्मभावे द्विरुक्तो [9]झो वा भवति[10] तत्सन्नियोगे क्यस्य च लुक् ॥ डज्झइ । [11]डहिज्जइ । भविष्यति । डज्झि[12]हिइ । डहिहिइ ॥

---

१ B °गे च क्यस्य लुक्. २ A °नोंतस्य. ३ A हंतेः खनूगः कर्मणि भावे चांते संयुक्तो मो वा भ°. ४ B हंतूणं. ५ A °मंतस्य. ६ B ब्भो. ७ B रुंब्भइ. ८ A °न्तस्य. ९ B ज्झो. १० B °तिस°. ११ PB दहि°. १२ A डज्झहिइ.

**बन्धो न्धः ॥ २४७ ॥**

बन्धेर्धातोर[1]न्त्यस्य न्ध इत्य[2]वयवस्य कर्मभावे ज्झो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ बज्झइ । बन्धिज्जइ ॥ भविष्यति । ब[3]ज्झिहिइ । बन्धिहिइ ॥

**समनूपाद्रुधेः ॥ २४८ ॥**

समनूपेभ्यः परस्य रुधे[4]रन्त्यस्य कर्मभावे ज्झो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ संरुज्झइ । अणुरुज्झइ । उवरुज्झइ । पक्षे । संरुन्धिज्जइ । अणुरुन्धिज्जइ । उवरुन्धिज्जइ ॥ भविष्यति । संरुज्झिहिइ । संरुन्धिहिइ । इत्यादि ॥

**गमादीनां द्वित्वम् ॥ २४९ ॥**

गमादीनाम[5]न्त्यस्य कर्मभावे द्वित्वं वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ गम् । गम्मइ । गमिज्जइ ॥ हस् । हस्सइ । हसिज्जइ ॥ भण् । भण्णइ[6] । भणिज्जइ । छुप् । छुप्पइ । छुविज्जइ ॥ रुद-नमोर्वः [४.२२६] इति कृतवकारादेशो रुदिरत्र[7] पठ्यते । रुव् । रुव्वइ । रुवि[8]ज्जइ ॥ लभ् । लब्भइ । लहिज्जइ ॥ कथ् । कत्थइ । कहिज्जइ ॥ भुज् । भुज्जइ ॥ भुञ्जिज्जइ ॥ भविष्यति । गम्मिहिइ । गमिहिइ । इत्यादि ॥

**हृ-कृ[9]-तृ-ज्रामीरः ॥ २५० ॥**

एषामन्त्यस्य ईर इत्यादेशो वा भवति तत्सन्नि[10]योगे च क्यलुक् ॥ हीरइ हरिज्जइ । कीरइ करिज्जइ । तीरइ तरिज्जइ । जीरइ जरिज्जइ ॥

**अर्जेर्विढप्पः ॥ २५१ ॥**

अन्त्यस्येति निवृत्तम् । अर्जेर्विढप्प इत्यादेशो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ विढप्पइ । पक्षे । विढविज्जइ । अज्जिज्जइ ॥

---

१ A °रंतस्य. २ B °त्यस्याव°. ३ B वज्झेहिइ. ४ B रुधेः क°. ५ A °मंतस्य. ६ P भण्णए । भणिज्जए. ७ A °दित्यत्र प°. B °दिरत्रोच्यते. ८ B रुव्विज्जइ. ९ B °कृ°. ६ १० P °गे क्यलुक् च. B °गे क्यस्य च लुक्.

**ज्ञो णव्व-णज्जौ ॥ २५२ ॥**

जानातेः कर्मभावे णव्व णज्ज इत्यादेशौ वा भवतः तत्सन्नियोगे क्यस्य च लुक् ॥ णव्वइ णज्जइ । पक्षे । जाणिज्जइ । मुणिज्जइ ॥ म्न-ज्ञोर्णः [२.४२] इति णादेशे तु । णाइज्जइ ॥ नञ्पूर्वकस्य । अणाइज्जइ ॥

**व्याहृगेर्वाहिप्पः ॥ २५३ ॥**

व्याहरतेः कर्मभावे वाहिप्प इत्यादेशो वा भवति तत्सन्नियोगे क्यस्य च लुक् ॥ वाहिप्पइ । वाहरिज्जइ ॥

**आरभेराढप्पः ॥ २५४ ॥**

आङ्पूर्वस्य[1] रभेः कर्मभावे आढप्प इत्यादेशो वा भवति क्यस्य[2] च लुक् ॥ आढप्पइ । पक्षे । आढवीअइ ॥

**स्निह-सिचोः सिप्पः ॥ २५५ ॥**[3]

अनयोः कर्मभावे सिप्प इत्यादेशो[4] भवति क्यस्य[2] च लुक् ॥ सिप्पइ । स्निह्यते । सिच्यते वा ॥

**ग्रहेर्घेप्पः ॥ २५६ ॥**

ग्रहेः कर्मभावे घेप्प इत्यादेशो वा भवति क्यस्य[2] च लुक् ॥ घेप्पइ । गिण्हिज्जइ[5] ॥

**स्पृशेश्छिप्पः ॥ २५७ ॥**

स्पृशतेः कर्मभावे छिप्पादेशो वा भवति क्यलुक् च ॥ छिप्पइ । छिविज्जइ ॥

---

१ A °पूर्वस्य. २ P B क्यलुक् च ।. ३ B स्नेह°. ४ A °शो वा भ°. ५ B गेण्हि°.

## क्तेनाप्फुण्णादयः[1] ॥ २५८ ॥

अप्फुण्णादयः शब्दा आक्रमिप्रभृतीनां धातूनां स्थाने क्तेन सह[2] वा निपात्यन्ते ॥ अप्फुण्णो[3] । आक्रान्तः ॥ उक्कोसं । उत्कृष्टम् ॥ फुडं । स्पष्टम् ॥ वोलीणो । अतिक्रान्तः ॥ वोसट्टो[4] । विकसितः ॥ निसुट्टो[5] । निपातितः ॥ लुग्गो । रुग्णः ॥ ल्हिक्को । नष्टः ॥ पम्हुट्ठो । प्रमृष्टः प्रमुषितो वा ॥ विढत्तं[6] । अर्जितम् ॥ छित्तं । स्पृष्टम् ॥ निमिअं । स्थापितम् ॥ चक्खिअं । आस्वादितम् ॥ लुअं[7] । लूनम् ॥ जढं । त्यक्तम् ॥ ज्झोसिअं[8] । क्षिप्तम् ॥ निच्छूढं । उद्वृत्तम्[9] ॥ पल्हत्थं पलोट्टं[10] च । पर्यस्तम् ॥ हीसमणं । हेषितम् । इत्यादि ॥

## धातवोर्थान्तरेपि ॥ २५९ ॥

उक्तादर्थादर्थान्तरेपि धातवो वर्तन्ते ॥ बलिः प्राणने पठितः खादनेपि वर्तते । बलइ । खादति प्राणनं करोति वा ॥ एवं कलिः संख्याने संज्ञानेपि । कलइ । जानाति संख्यानं करोति वा ॥ रिगिर्गतौ प्रवेशेपि ॥ रिगइ[11] । प्रविशति गच्छति वा ॥ कांक्षतेर्वम्फ आदेशः प्राकृते । वम्फइ । अस्यार्थः । इच्छति[12] खादति वा ॥ फक्कतेस्थक्क आदेशः । थक्कइ । नीचां गतिं करोति विलम्बयति[13] वा ॥ विलप्युपालम्भ्योर्[14] झङ्ख आदेशः । झङ्खइ । विलपति[15] उपालभते भाषते वा ॥ एवं पडिवालेइ[16] । प्रतीक्षते रक्षति वा ॥ केचित् कैश्चिदुपसर्गैर्नित्यम् । पहरइ । युध्यते ॥ संहरइ । संवृणोति ॥ अणुहरइ । सदृशीभवति ॥ नीहरइ । पुरीषोत्सर्गं करोति ॥ विहरइ । क्रीडति[17] ॥ आहरइ । खादति ॥ पडिहरइ । पुनः पूरयति ॥ परिहरइ । त्यजति ॥ उवहरइ । पूजयति ॥ वाहरइ । आह्वयति ॥ पवसइ । देशान्तरं गच्छति ॥ उच्चुपइ[18] । चटति ॥ उल्लुहइ । निःसरति[19] ॥

---

१ A °नाऽफुण्णा°. २ B सह नि°. ३ A अफुण्णो. ४ B °सड्डो. ५ B °सुड्डो. ६ A वेढत्तं. ७ A लूअं. ८ A ज्झासिअं. ९ P उद्धृतं. १० B पल्लोट्टं. ११ P रिग्गइ. B रिंगइ. १२ B पृच्छति. १३ B विडंब°. १४ A °पालंभे झंख°. P °पालभ्यो°. १५ A °पइ. १६ P B °वालइ. १७ A क्रीणाति. १८ P उच्चुप्पइ. १९ B °ति ॥ अथ शौरसेनी ॥ तो°.

**तो दोनादौ शौरसेन्यामयुक्तस्य ॥ २६० ॥**

शौरसेन्यां भाषायामनादावपदादौ वर्तमानस्य तकारस्य दकारो भवति न चेदसौ वर्णान्तरेण संयुक्तो भवति ॥ तदो पूरिद-पदिञ्ञेन[1] मारुदिना मन्तिदो ॥ एतस्मात् । एदाहि । एदाओ ॥ अनादाविति किम् । तधा करेध जधा तस्स राइणो अणुकम्पणीआ भोमि ॥ अयुक्तस्येति किम् । मत्तो । अय्यउत्तो[2] । असंभाविद-सक्कारं । हला सउन्तले ॥

**अधः क्वचित् ॥ २६१ ॥**

वर्णान्तरस्याधोवर्तमानस्य तस्य शौरसेन्यां दो भवति । क्वचिल्लक्ष्यानुसारेण ॥ महन्दो । निच्चिन्दो । अन्देउरं ॥

**वादेस्तावति[3] ॥ २६२ ॥**

शौरसेन्यां तावच्छब्दे आदेस्तकारस्य दो वा भवति ॥ दाव । ताव ॥

**आ आमन्त्र्ये सौ वेनो नः ॥ २६३ ॥**

शौरसेन्यामिनो नकारस्य आमन्त्र्ये[4] सौ परे आकारो वा भवति ॥ भो कञ्चुइआ । सुहिआ[5] । पक्षे । भो तवस्सि । भो मणस्सि ॥

**मो वा ॥ २६४ ॥**

शौरसेन्यामामन्त्र्ये सौ परे नकारस्य मो वा भवति ॥ भो रायं । भो विअयवम्मं । सुकम्मं । भयवं कुसुमाउह । भयवं तित्थं पवत्तेह । पक्षे । सयल-लोअ-अन्तेआरि भयवं[6] हुदवह ॥

**भवद्भगवतोः ॥ २६५ ॥**

आमन्त्र्य इति निवृत्तम् । शौरसेन्यामनयोः सौ परे नस्य मो भवति ॥ किं एत्थभवं[7] हिदएण चिन्तेदि । एदु भवं । समणे भगवं[8] महावीरे ॥

---

१ P °ञ्ञेण मारुदिणा म°. २ A अज्जउ°. ३ B °ति शौरसेन्यां ॥ ६२ ॥ ताव°. ४ A आमन्त्र्ये. ५ P भो सुहिआ. ६ A भयवं. ७ B भवम्. ८ P भयवं.

पज्जलिदो भयवं हुदासणो ॥ क्वचिदन्यत्रापि । मघवं पागसासणे । संपाइअवं सीसो[1] । कयवं । करेमि काहं च ॥

### न वा र्यो य्यः ॥ २६६ ॥

शौरसेन्यां र्यस्य स्थाने य्यो वा भवति ॥ अय्यउत्त पय्याकुलीकदह्मि । सुय्यो । पक्षे । अज्जो । पज्जाउलो । कज्ज-परवसो ॥

### थो[3] धः ॥ २६७ ॥

शौरसेन्यां थस्य धो वा भवति ॥ कधेदि कहेदि । णाधो णाहो । कधं कहं । राज-पधो राज-पहो ॥ अपदादावित्येव । थामं । थेओ ॥

### इह-हचोर्हस्य ॥ २६८ ॥

इहशब्दसंबन्धिनो मध्यमस्येत्था-हचौ [३.१४३] इति विहितस्य हचश्च हकारस्य शौरसेन्यां धो वा भवति[4] ॥ इध । होध । परित्तायध ॥ पक्षे । इह । होह । परित्तायह ॥

### भुवो भः ॥ २६९ ॥

भवतेर्हकारस्य शौरसेन्यां भो वा भवति ॥ भोदि होदि । भुवदि हुवदि । भवदि हवदि ॥

### पूर्वस्य पुरवः ॥ २७० ॥

शौरसेन्यां पूर्वशब्दस्य पुरव इत्यादेशो वा भवति ॥ अपुरवं[5] नाडयं । अपुरवागदं[6][7] । पक्षे । अपुव्वं पदं । अपुव्वागदं ॥

### क्त्व इय-दूणौ[8] ॥ २७१ ॥

शौरसेन्यां क्त्वाप्रत्ययस्य इय दूण इत्यादेशौ वा भवतः ॥ भविय भोदूण । हविय होदूण । पढिय पढिदूण[9] । रमिय रन्दूण । पक्षे भोत्ता । होत्ता । पढित्ता । रन्ता[10] ॥

---

१ A °सो । संपादितवान् शिष्यः । क°. २ A अय्या°. ३ B थोधः शौरसेन्यां ॥ ६७ ॥ थ°. ४ A °ति ॥ इह । इध. ५ A °रवयं ना°. ६ B °वादग°. ७ A °दं । अपुव्वागदं. ८ P B °अ. ९ A °ण । मरिय । मरिदूण । र°. १० P रनूत्ता.

**क्त्व-गमो डडुअः[1] ॥ २७२ ॥**

आभ्यां परस्य क्त्वाप्रत्ययस्य डित् अडुअ इत्यादेशो[2] वा भवति ॥ [3]कडुअ । गडुअ । पक्षे । करिय । करिदूण । गच्छिय । गच्छिदूण ॥

**दिरिचेचोः ॥ २७३ ॥**

त्यादीनामाद्यत्रयस्याद्यस्येचेचौ [३.१३९] इति विहितयोरिचेचोः स्थाने दिर्भवति ॥ वेति निवृत्तम् । नेदि । देदि । भोदि । होदि ॥

**अतो देश्च ॥ २७४ ॥**

अकारात्परयोरिचेचोः स्थाने दे[4]श्चकाराद् दिश्च भवति ॥ अच्छदे । अच्छदि[5] ॥ गच्छदे । गच्छदि ॥ रमदे । रमदि ॥ किज्जदे । किज्जदि ॥ अत इति किम् । वसुआदि । [6]नेदि । भोदि ॥

**भविष्यति स्सिः ॥ २७५ ॥**

शौरसेन्यां भविष्यदर्थे विहिते प्रत्यये परे स्सिर्भवति ॥ हिस्साहामपवादः ॥ भविस्सिदि । करिस्सिदि । गच्छिस्सिदि ॥

**अतो ङसेर्डादो-डादू ॥ २७६ ॥**

अतः परस्य ङसेः शौरसेन्यां आदो [8]आदु इत्यादेशौ डितौ भवतः ॥ दूरादो य्येव । दूरादु ॥

**इदानीमो दाणिं ॥ २७७ ॥**

शौरसेन्यामिदानीमः स्थाने दाणिमित्यादेशो भवति ॥ अनन्तरकरणीयं दाणिं आणवेदु अय्यो ॥ व्यत्ययात्प्राकृतेपि । अन्नं दाणिं बोहिं ॥

**तस्मात्ताः ॥ २७८ ॥**

शौरसेन्यां तस्माच्छब्दस्य ता इत्यादेशो भवति ॥ ता जाव पविसामि । ता अलं एदिणा माणेण[9] ॥

---

१ P °दुअ°. २ P °शो भ°. ३ P कदुअ । गदुअ. ४ A दे च°. ५ A °दि । रम°. ६ B नोदि. ७ B अकारात्प°. ८ A B आदू. ९ B माणेन

**मोन्त्याण्णो वेदेतोः ॥ २७९ ॥**

शौरसेन्यामन्त्यान्मकारात्पर इदेतोः परयोर्णकारागमो वा भवति[1] ॥ इकारे । जुत्तं[2] णिमं[3] जुत्तमिणं । सरिसं णिमं सरिसमिणं । एकारे । किं णेदं किमेदं । एवं णेदं एवमेदं ॥

**एवार्थे य्येव ॥ २८० ॥**

एवार्थे य्येव इति निपातः[4] शौरसेन्यां प्रयोक्तव्यः ॥ मम य्येव बम्भणस्स । सो य्येव एसो ॥

**हञ्जे चेट्याह्वाने ॥ २८१ ॥**

शौरसेन्यां चेट्याह्वाने हञ्जे इति निपातः प्रयोक्तव्यः ॥ हञ्जे चदुरिके[5] ॥

**हीमाणहे विस्मय-निर्वेदे ॥ २८२ ॥**

शौरसेन्यां हीमाणहे इत्ययं निपातो विस्मये[6] निर्वेदे च प्रयोक्तव्यः ॥ विस्मये ॥ हीमाणहे जीवन्त-वश्चा मे जणणी ॥ निर्वेदे । हीमाणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्ववसिदेण[7] ॥

**णं नन्वर्थे ॥ २८३ ॥**

शौरसेन्यां नन्वर्थे णमिति निपातः प्रयोक्तव्यः ॥ णं अफलोदया । णं अय्यमिस्सेहिं पुढमं य्येव आणत्तं[8] । णं भवं मे अग्गदो चलदि । आर्षे वाक्यालंकारेपि दृश्यते । नमोत्थु णं । जया णं । तया णं ॥

**अम्महे हर्षे ॥ २८४ ॥**

शौरसेन्याम् अम्महे इति निपातो हर्षे प्रयोक्तव्यः ॥ अम्महे एआए सुम्मिलाए सुपलिगढिदो भवं ॥

---

१ A °ति । जु°. २ B ज्जु°. ३ A °मं । सरिसमिणं. ४ B °तः प्र°. ५ B चतु° ६ A °स्मयनि°. ७ P B दुव्वसि°. ८ B आणंतं.

हीही विदूषकस्य ॥ २८५ ॥

शौरसेन्यां हीही इति निपातो विदूषकाणां हर्षे द्योत्ये प्रयोक्तव्यः ॥ हीही भो संपन्ना मणोरधा पिय-वयस्सस्स ॥

शेषं प्राकृतवत् ॥ २८६ ॥

शौरसेन्यामिह प्रकरणे यत्कार्यमुक्तं ततोन्यच्छौरसेन्यां प्राकृतवदेव भवति ॥ दीर्घ-ह्रस्वौ मिथो वृत्तौ [१.४] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] एतस्मात्सूत्रात्प्राग् यानि सूत्राणि एषु यान्युदाहरणानि तेषु मध्ये अमूनि तदवस्थान्येव शौरसेन्यां भवन्ति अमूनि पुनरेवंविधानि भवन्तीति विभागः प्रतिसूत्रं स्वयमभ्यूह्य दर्शनीयः ॥ यथा । अन्दावेदी । जुवदि-जणो । मणसिला । इत्यादि[1] ॥

अत एत्सौ[2] पुंसि मागध्याम् ॥ २८७ ॥

मागध्यां भाषायां सौ परे अकारस्य[3] एकारो भवति पुंसि पुल्लिङ्गे ॥ एष मेषः । एशे मेशे ॥ एशे पुलिशे ॥ करोमि[4] भदन्त[5] । करेमि भन्ते ॥ अत इति किम् । णिही । कली । गिली ॥ पुंसीति किम् । जलं ॥ यदपि "पोराणमद्ध-मागह-भासा-निययं हवइ सुत्तम्" इत्यादिनार्षस्य अर्द्धमागधभाषानियतत्वमाम्नायि वृद्धैस्तदपि प्रायोस्यैव विधानान्न वक्ष्यमाणलक्षणस्य ॥ कयरे आगच्छइ ॥ से तारिसे दुक्खसहे जिइन्दिए[6] । इत्यादि ॥

र-सोर्ल-शौ ॥ २८८ ॥

मागध्यां रेफस्य दन्त्यसकारस्य च स्थाने यथासंख्यं लकारस्तालव्य-शकारश्च भवति ॥ र ॥ नले । कले ॥ स । हंशे । शुदं । शोभणं ॥ उभयोः । शालशे । पुलिशे ॥

लहश-वश-नमिल-शुल-शिल-विअलिदं[7]-मन्दाल-लायिदंहि[8]-युगे ।
वील-यिणे पक्खालदु मम शयलमवय्य-यम्बालं[9] ॥

---

१ B °दि ॥ अथ मागधी ॥ २ A एतत्पुं°. ३ B आका°. ४ B करेमि. ५ P भदन्ते.
६ P जिएन्दि°. ७ B °लिअ°. ८ B °यियं°. ९ A जंबालं.

**स-षोः संयोगे सोग्रीष्मे ॥ २८९ ॥**

मागध्यां सकारषकारयोः संयोगे वर्तमानयोः सो भवति ग्रीष्मशब्दे तु न भवति । ऊर्ध्वलोपाद्यपवादः ॥ स । पस्खलदि हस्ती[1] । बुहस्पदी । मस्कली । विस्मये ॥ ष । शुस्क-दालुं । कस्टं । विस्नुं । शस्प-कवले । [2]उस्मा । निस्फलं । धनुस्खण्डं ॥ अग्रीष्म इति किम् । गिम्ह-वाशले ॥

**ट्ट-ष्ठयोस्टः ॥ २९० ॥**

द्विरुक्तस्य [3]टस्य षकाराक्रान्तस्य च ठकारस्य मागध्यां सकाराक्रान्तः टकारो भवति ॥ ट्ट । पस्टे । भस्टालिका । भस्टिणी ॥ ष्ठ । [4]शुस्टु कदं । कोस्टागालं ॥

**स्थ-र्थयोस्तः ॥ २९१ ॥**

स्थ र्थ इत्येतयोः स्थाने मागध्यां सकाराक्रान्तः तो भवति[5] ॥ स्थ । उवस्तिदे । शुस्तिदे ॥ र्थ । अस्त-वदी । शस्तवाहे ॥

**ज-द्य-यां यः ॥ २९२ ॥**

मागध्यां जद्ययां स्थाने यो भवति ॥ ज । याणदि । यणवदे । अय्युणे । दुय्यणे । गय्यदि । गुण-वय्यिदे ॥ द्य । मय्यं । अय्य किल विय्याहले आगदे ॥ य । यादि । [6]यधाशलूवं[7] । याण-वत्तं । यदि ॥ यस्य यत्वविधानम् आदेर्यो जः [१.२४५] इति बाधनार्थम् ॥

**न्य-ण्य-ज्ञ-ञ्जां ञ्ञः ॥ २९३ ॥**

मागध्यां न्य ण्य ज्ञ ञ्ज इत्येतेषां द्विरुक्तो ञो[8] भवति ॥ न्य । अहिमञ्ञु[9]-कुमाले । अञ्ञ-दिशं । शामञ्ञ-गुणे । कञ्ञका-वलणं[10] ॥ ण्य । पुञ्ञवन्ते[11] । अबम्हञ्ञं । पुञ्ञाहं । पुञ्ञं ॥ ज्ञ । पञ्ञाविशाले । शव्वञ्ञे[12] । अवञ्ञा[13] ॥ ञ्ज । अञ्ञली । धणञ्ञए । पञ्ञले ॥

---

१ B °स्ती । म°. २ A उस्सा. ३ B ठकारस्य. ४ B सुस्टु. ५ B °ति ॥ उ°. ६ B यथाश°. ७ A °लूवमया°. ८ B ञ्जो°. ९ A °मञ्जकु°. १० B °काचल°. ११ B °वन्तो. १२ A सव्व.° १३ A सव्वञ्जा । अज्ञ । अञ्जली.

**[1]व्रजो जः ॥ २९४ ॥**

मागध्यां व्रजेर्जकारस्य [2]ञ्जो भवति । यापवादः ॥ [3]वञ्ञदि ॥

**छस्य श्चोनादौ[4] ॥ २९५ ॥**

मागध्यामनादौ वर्तमानस्य छस्य तालव्यशकाराक्रान्तश्चो भवति ॥ [5]गश्च गश्च । उश्चलदि । पिश्चिले । पुश्चदि ॥ लाक्षणिकस्यापि । आपन्नवत्सल[6]: । आवन्न-वश्चले ॥ तिर्यक् प्रेक्षते । तिरिच्छि पेच्छइ । तिरिश्चि[7] पेस्कदि[8] ॥ अनादाविति किम् । छाले ॥

**क्षस्य ≍कः ॥ २९६ ॥**

मागध्यामनादौ वर्तमानस्य क्षस्य ≍को जिह्वामूलीयो भवति ॥ [9]य[10]≍के । ल≍क[11]शे ॥ अनादावित्येव । खय-यलहला । क्षयजलधरा इत्यर्थः ॥

**स्कः प्रेक्षा[12]चक्षोः ॥ २९७ ॥**

मागध्यां प्रेक्षेराचक्षेश्च क्षस्य सकाराक्रान्तः को भवति ॥ जिह्वामूलीयापवादः ॥ पेस्कदि । आचस्कदि ॥

**तिष्ठश्चि[13]ष्ठः ॥ २९८ ॥**

मागध्यां स्थाधातोर्यस्तिष्ठ इत्यादेशस्तस्य चिष्ठ[14] इत्यादेशो भवति ॥ चिष्ठदि ॥

**अवर्णाद्वा ङसो डाहः ॥ २९९ ॥**

मागध्यामवर्णात्परस्य ङसो डित् आह इत्यादेशो वा भवति ॥ हगे न [15]एलिशाह कम्माह काली । भगदत्त[16]-शोणिदाह कुम्भे । पक्षे । भीमशेण[17]स्स पश्चादो हिण्डीअदि । हिडिम्बाए घ[18]डुक्कय-शोके ण उवशमदि ॥

---

१ B व्रजेर्जः. २ B ज्जो. ३ B वजदि. ४ B २९५ ॥ अनादौ. ५ B °श्च । उ°. ६ B °लः । आवन्नवच्छले । आ.° ७ A तिरश्चि. ८ B पेश्चदि. ९ A °स्य≍कजि°. १० A य≍क. ११ B °कसे. १२ B °चक्ष्योः. १३ A °श्चिट्ठः. १४ चिट्ठ°. १५ P ईदिशा°. १६ B भदन्त. १७ P °णश्श. १८ P घुड्ड°.

## आमो डाहँ वा ॥ ३०० ॥

मागध्यामवर्णात्परस्य आमोनुनासिकान्तो डित् आहादेशो वा भवति ॥ शा-यणाहँ सुहं[1] । पक्षे । नलिन्दाणं ॥ व्यत्ययात्प्राकृतेपि । ताहँ । तुम्हाहँ । अम्हाहँ । सरिआहँ । कम्माहँ ॥

## अहं-वयमोर्हगे ॥ ३०१ ॥

मागध्यामहंवयमोः स्थाने हगे इत्यादेशो भवति ॥ हगे शक्कावदालतिस्त[2]-णिवाशी[3] धीवले । हगे शंपत्ता ॥

## शेषं शौरसेनीवत् ॥ ३०२ ॥

मागध्यां यदुक्तं ततोन्यच्छौरसेनीवद् द्रष्टव्यम् ॥ तत्र तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] ॥ पविशदु[4] आयुत्ते[5] शामि-पशादाय ॥ अधः क्वचित् [४.२६१] ॥ अले किं एशे[6] महन्दे[7] कलयले ॥ वादेस्तावति [४.२६२] ॥ मालेध वा धलेध वा[8] । अयं दाव शे आगमे[9] ॥ आ आमन्त्र्ये सौ वेनो नः [४.२६३] ॥ भो कञ्चुइआ ॥ मो वा [४.२६४] ॥ भो लायं[10] ॥ भवद्भगवतोः [४.२६५] ॥ एदु भवं शमणे भयवं महावीले । भयवं[11] कदन्ते[12] ये अप्पणो पक्कं उज्झिय पलस्स पक्कं[13] पमाणीकलेशि ॥ न वा र्यो य्यः [४.२६६] ॥ अय्य[14] एशे खु[15] कुमाले मलयकेदू ॥ थो धः [४.२६७] ॥ अले कुम्भिला कधेहि ॥ इह-हचोर्हस्य [४.२६८] ॥ ओशलध[16] अय्या ओशलध ॥ भुवो भः [४.२६९] ॥ भोदि ॥ पूर्वस्य पुरवः [४.२७०] ॥ अपुरवे[17] ॥ क्त्व इय[18]-दूणौ [४.२७१] ॥ किं खु शोभणे बम्हणे शित्ति कलिय लञ्ञा पलिग्गहे दिण्णे ॥ कृ-गमो डडुअः [४.२७२] ॥ कडुअ[19] । गडुअ[19] ॥ दिरिचेचोः [४.२७३] ॥ अमच्च-लक्कशं पिक्खिदुं[20] इदो य्येव आग-

---

१ P B मुहं. २ A °तिस्थ.° ३ B °वाशी. ४ A °विसदु. ५ P आउत्ते. ६ A एसे. ७ B महेंदे. ८ B °वाय । यदा.° ९ A °मे ॥ आम.° १० P लायं. ११ B भगवं. १२ B कयंते. १३ A पक्खं. १४ A अय्ये एसे खु. १५ B क्खु. १६ B ऊशालधअय्य । कुश°. १७ P अपुलवे. १८ P B इअ°. १९ P °दु°. २० P B पेक्खिदुं.

श्चदि ॥ अतोदेश्च [४.२७४] ॥ अले किं एशे महन्दे कलयले शु-णीअदे ॥ भविष्यति स्सिः [४.२७५] ॥ ता कहिं नु गदे लुहिलप्पिए भविस्सिदि ॥ अतो ङसेर्डादो-डादू [४.२७६] ॥ अहंपि भागुलाय-णादो मुद्दं पावेमि ॥ इदानीमो दाणिं [४.२७७] ॥ शुणध दाणिं हगे शक्कावयाल-तिस्त-णिवाशी धीवले ॥ तस्मात्ताः [४.२७८] ॥ ता याव पविशामि ॥ मोन्त्याण्णो वेदेतोः [४.२७९] ॥ युत्तं णिमं । शलिशं णिमं ॥ एवार्थे य्येव [४.२८०] ॥ मम य्येव ॥ हञ्जे चेट्या-ह्वाने [४.२८१] ॥ हञ्जे चदुलिके ॥ हीमाणहे विस्मय-निर्वेदे [४.२८२] ॥ विस्मये । यथा उदात्तराघवे । राक्षसः । हीमाणहे जी-वन्त-वश्चा मे जणणी ॥ निर्वेदे ॥ यथा विक्रान्तभीमे । राक्षसः । ही-माणहे पलिस्सन्ता हगे एदेण निय-विधिणो दुव्ववशिदेण ॥ णं न-न्वर्थे [४.२८३] ॥ णं अवशलोपशप्पणीया लायाणो ॥ अम्महे हर्षे [४.२८४] ॥ अम्महे एआए शुम्मिलाए शुपलिगढिदे भवं ॥ हीही विदूषकस्य [४.२८५] ॥ हीही संपन्ना मे मणोलधा पियवयस्सस्स ॥ शेषं प्राकृतवत् [४.२८६] ॥ मागध्यामपि दीर्घ-ह्रस्वौ मिथो वृत्तौ [१.४] इत्यारभ्य तो दोनादौ शौरसेन्यामयुक्तस्य [४.२६०] इत्य-स्मात्प्राग् यानि सूत्राणि तेषु यान्युदाहरणानि सन्ति तेषु मध्ये अमूनि तदवस्थान्येव मागध्याममूनि पुनरेवंविधानि भवन्तीति विभागः स्व-यमभ्यूह्य दर्शनीयः ॥

ज्ञो ञ्ञः पैशाच्याम् ॥ ३०३ ॥

पैशाच्यां भाषायां ज्ञस्य स्थाने ञ्ञो भवति ॥ पञ्ञा । सञ्ञा । सव्व-ञ्ञो । ञ्ञानं । विञ्ञानं ॥

---

१ B महेंदे. २ P यदे. ३ B °वेम्मि. ४ P °वदाल°. ५ A °निश्च°. ६ P चट्टुलिके. ७ A °व्वविशेदे°. ८ P °लोवशप्प°. ९ A °सप्पिणी°. १० A °न्ना म°. ११ B °यः ॥ अथ पैशाची ॥ ज्ञो°. १२ B °ति । स°. १३ P ज्ञानं. १४ A °नं ॥ रा°.

## राज्ञो वा चिञ्[1] ॥ ३०४ ॥

पैशाच्यां राज्ञ इति शब्दे यो ज्ञकारस्तस्य चिञ्[2] आदेशो वा भवति ॥ राचिञा लपितं । रञ्ञा लपितं । राचिञो धनं । रञ्ञो धनं । ज्ञ इत्येव । राजा[3] ॥

## न्य-ण्योर्ञ्ञः[4] ॥ ३०५ ॥

पैशाच्यां न्यण्योः स्थाने ञ्ञो भवति ॥ कञ्ञका । अभिमञ्ञू । पुञ्ञ-कम्मो । पुञ्ञाहं[5] ॥

## णो नः ॥ ३०६ ॥

पैशाच्यां णकारस्य नो भवति ॥ गुन-गन-युत्तो[6] । गुनेन ॥

## तदोस्तः[7] ॥ ३०७ ॥

पैशाच्यां तकारदकारयोस्तो भवति ॥ तस्य । भगवती । पव्वती[8] । सतं ॥ दस्य । मतन-परवसो । सतनं । तामोतरो । पतेसो । वतनकं । होतु । रमतु[9] ॥ तकारस्यापि तकारविधानमादेशान्तरबाधनार्थम् । तेन पताका वेतिसो[10] इत्याद्यपि सिद्धं भवति ॥

## लो ळः[11] ॥ ३०८ ॥

पैशाच्यां लकारस्य ळकारो[12] भवति ॥ सीळं[13]। कुळं[13]। जळं[13]। सलिळं[14] । कमळं[13] ॥

## श-षोः सः ॥ ३०९ ॥

पैशाच्यां शषोः सो भवति ॥ श । सोभति । सोभनं । ससी । सक्को । सङ्खो ॥ ष । विसमो । किसानो[15] ॥ न कगचजादिषट्शम्यन्तसूत्रोक्तम् [४.३२४] इत्यस्य बाधकस्य बाधनार्थोयं योगः ॥

---

१ B चिञः. २ B चिञ. ३ B राया. ४ A °ण्योर्ञः. ५ A पुन्नाहं. ६ P जुत्तो. B युक्तो. ७ B °स्तः पैशाच्यां ॥ ६ ॥ त.° ८ A पव्वत्ती. ९ P °तु । तुमातो । तुमातु । ममातो । ममातु । त°. १० P B वेतसो. ११ B °लः पैशाच्यां ॥ ७ ॥ ल°. १२ A ळो. B लकारो. १३ °लं. १४ सलिलं. १५ P विसानो.

**हृदये यस्य पः ॥ ३१० ॥**

पैशाच्यां हृदयशब्दे यस्य पो भवति ॥ हितपकं । किंपि किंपि हितपके अत्थं चिन्तयमानी ॥

**टोस्तुर्वा ॥ ३११ ॥**

पैशाच्यां टोः स्थाने तुर्वा भवति ॥ कुतुम्बकं । कुटुम्बकं ॥

**क्त्वस्तूनः ॥ ३१२ ॥**

पैशाच्यां क्त्वाप्रत्ययस्य स्थाने तून इत्यादेशो भवति ॥ गन्तून । रन्तून । हसितून । पठितून[1] । कधितून ॥

**द्धून-त्थूनौ[2] ष्ट्वः[3] ॥ ३१३ ॥**

पैशाच्यां ष्ट्वा इत्यस्य स्थाने द्धून त्थून इत्यादेशौ भवतः । पूर्वस्यापवादः ॥ नद्धून । नत्थून । तद्धून । तत्थून ॥

**र्य-स्न-ष्टां रिय-सिन-सटाः[4] क्वचित् ॥ ३१४ ॥**

पैशाच्यां र्यस्नष्टां स्थाने यथासंख्यं रिय सिन सट इत्यादेशाः क्वचिद् भवन्ति ॥ भार्या । भारिया ॥ स्नातम् । सिनातं ॥ कष्टम् । कसटं ॥ क्वचिदिति किम्[5] । सुज्जो । सुनुसा । तिट्ठो ॥

**क्यस्येय्यः ॥ ३१५ ॥**

पैशाच्यां क्यप्रत्ययस्य इय्य इत्यादेशो भवति ॥ गिय्यते । दिय्यते । रमिय्यते । पठिय्यते[6] ॥

**कृगो डीरः ॥ ३१६ ॥**

पैशाच्यां कृगः परस्य[7] क्यस्य स्थाने डीर इत्यादेशो भवति ॥ पुधुमतंसने सव्वस्स य्येव सम्मानं कीरते ॥

---

१ P पढितुन. २ P द्दून. ३ B ष्ट्वः ॥ १२ ॥ ष्ट्वा. ४ P °सताः. ५ A B किम् । सुनु°. ६ P B पढिय्यते. ७ A °स्य स्था°.

याद्दशादेर्दुस्तिः ॥ ३१७ ॥

पैशाच्यां याद्दश इत्येवमादीनां द्द इत्यस्य स्थाने तिः[1] इत्यादेशो भवति ॥ यातिसो । तातिसो[2] । केतिसो । एतिसो[3] । भवातिसो । अञ्ञातिसो । युम्हातिसो[4] । अम्हातिसो ॥

इचेचः ॥ ३१८ ॥

पैशाच्यामिचेचोः स्थाने तिरादेशो भवति ॥ वसुआति । भोति । नेति । तेति ॥

आत्तेश्च ॥ ३१९ ॥

पैशाच्यामकारात्परयोः इचेचोः स्थाने तेश्च[5]कारात् तिश्चादेशो भवति॥ लपते । लपति । अच्छते । अच्छति । गच्छते । गच्छति । रमते । रमति ॥ आदिति किम् । होति । नेति ॥

भविष्यत्येय्य एव ॥ ३२० ॥

पैशाच्यामिचेचोः स्थाने भविष्यति एय्य एव भवति न तु स्सिः ॥ तं तद्धून[6] चिंतितं रञ्ञा का एसा हुवेय्य ॥

अतो ङसेर्डातो-डातू ॥ ३२१ ॥

पैशाच्यामकारात्परस्य ङसेर्डितौ आतो आतु इत्यादेशौ भवतः ॥ ताव[7] चँ तीए दूरातो[8] य्येव तिट्ठो । तूरातु[9] । तुमातो । तुमातु । ममातो । ममातु ॥

तदिदमोष्टा नेन स्त्रियां तु नाए ॥ ३२२ ॥

पैशाच्यां तदिदमोः स्थाने टाप्रत्ययेन सह नेन इत्यादेशो भवति । स्त्रीलिङ्गे तु नाए इत्यादेशो भवति ॥ तत्थ चँ नेनं[10] कत-सिनानेन ॥ स्त्रियाम् । पूजितो चँ नाए पातग्ग-कुसुम-प्पतानेन ॥ टेति किम् । एवं चिन्तयन्तो[11] गतो सो ताए[12] समीपं[13] ॥

---

१ P B तिरादे°. २ P °सो । ए°. ३ P °सो । अ°. ४ B उम्हा°. Dhundhikâ here reads तुझा°. in accordance with I. 246. ५ A B ते चका°. ६ P तद्धुन. ७ B व. ८ P तूरातो. ९ B दूरातु. १० P नेन । कतसिन । नेन. ११ A चिंचय°. १२ A तीए. १३ B समीवे.

**शेषं शौरसेनीवत् ॥ ३२३ ॥**

पैशाच्यां यदुक्तं ततोन्यच्छेषं पैशाच्यां शौरसेनीवद् भवति ॥ अध ससरीरो भगव मकर[1]-धजो । एत्थ परिब्भमन्तो हुवेय्य । एवंविधाए भगवतीए कधं तापस-वेस-गहनं कतं ॥ एतिसं अतिट्ठ-पुरवं महा-धनं तद्धून[2] । भगवं यदि[3] मं वरं पयच्छसि[4] राजं[5] च दाव लोकं[6] । तावँ[7] च तीए दूरातो[8]य्येव तिट्ठो सो आगच्छमानो[9] राजा[10] ॥

**न क-ग-च-जादि-षट्-शम्यन्त-सूत्रोक्तम् ॥ ३२४ ॥**

पैशाच्यां क-ग-च-ज-त-द-प-य-वां प्रायोलुक् [१.१७७] इत्यारभ्य षट्-शमी-शाव-सुधा-सप्तपर्णेष्वादेश्छेः[11] [१.२६५] इति यावद्यानि सूत्राणि तैर्यदुक्तं कार्यं तन्न भवति ॥ मकरकेतू । सगर-पुत्त-वचनं । विजयसेनेन लपितं । मतनं[12] । पापं । आयुधं । तेवरो ॥ एवमन्यसूत्राणामप्युदाहरणानि द्रष्टव्यानि ॥

**चूलिका[13]-पैशाचिके तृतीय-तुर्ययोराद्य-द्वितीयौ ॥ ३२५ ॥**

चूलिकापैशाचिके वर्गाणां तृतीयतुर्ययोः स्थाने यथासंख्यमाद्यद्वितीयौ भवतः ॥ नगरम् । नकरं ॥ मार्गणः[14] । मक्कनो ॥ गिरि-तटम् । किरि-तटं ॥ मेघः । मेखो ॥ व्याघ्रः । वक्खो ॥ घर्मः । खम्मो ॥ राजा । राचा[15] ॥ जर्जरम् । चच्चरं ॥ जीमूतः । चीमूतो ॥ निर्झरः । निच्छरो ॥ झर्झरः । छच्छरो[16] ॥ तडागम् । तटाकं[17] ॥ मण्डलम् । मण्टलं ॥ डमरुकः । टमरुको ॥ गाढम् । काठं ॥ षण्ढः । सण्ठो ॥ ढक्का । ठक्का ॥ मदनः । मतनो ॥ कन्दर्पः । कन्तप्पो ॥ दामोदरः । तामोतरो ॥ मधुरम् । मथुरं ॥ बान्धवः । पन्थवो[18] ॥ धूली । थूली ॥ बालकः । पालको ॥ रभसः । रफसो[19] ॥ रम्भा । रम्फा ॥ भगवती । फकवती ॥ नियोजितम् । नियोचितं ॥ क्वचिल्लाक्षणिकस्यापि । पडिमा इत्यस्य स्थाने पटिमा[20] । दाढा इत्यस्य स्थाने ताठा ॥

---

१ P °रद्धजो. B °रध्वजो. २ P तथ्थून. ३ P यति. ४ P °यच्छसे. B °यच्थसे. ५ B रायं. ६ P लोके. ७ B °व ती°. ८ P तूरा°. ९ B अग°. १० B राआ ॥ अथ चूलिका-पैशाची ॥ न°. ११ B °श्च. १२ A पतनं. १३ A चौलिका°. १४ A मार्गनगः. १५ B राता. १६ A छर्छरो. १७ B तटागं. १८ B पन्धवो. १९ A °सो । भग°. २० B पढिमा.

## रस्य लो वा ॥ ३२६ ॥

चूलिकापैशाचिके रस्य स्थाने लो वा भवति ॥

पनमथ पनयं[1]-पकुप्पित-गोली-चलनग्ग[2]-लग्ग-पति-बिम्बं ।
तससु नख-तप्पनेसुं एकातस-तनु-धलं[3] लुद्दं[4] ॥
नच्चन्तस्स[5] य लीला-पातुक्खेवेन कम्पिता वसुधा[6] ।
उच्छल्लन्ति[7] समुद्दा सइला निपतन्ति तं हलं नमथ ॥

## नादि-युज्योरन्येषाम् ॥ ३२७ ॥

चूलिकापैशाचिकेपि अन्येषामाचार्याणां मतेन तृतीयतुर्ययोरादौ वर्तमानयोर्युजिधातौ च आद्यद्वितीयौ न भवतः ॥ गतिः । गती ॥ घर्मः । घम्मो ॥ जीमूतः । जीमूतो ॥ झर्झरः । झच्छरो ॥ डमरुकः । डमरुको ॥ ढक्का । ढक्का[8] ॥ दामोदरः । दामोतरो[9] ॥ बालकः । बालको ॥ भगवती । भकवती[10] ॥ नियोजितम् । नियोजितं[11] ॥

## शेषं प्राग्वत् ॥ ३२८ ॥

चूलिकापैशाचिके तृतीयतुर्ययोरित्यादि यदुक्तं ततोन्यच्छेषं प्राक्तन[12]-पैशाचिकवद् भवति ॥ नकरं । मक्कनो[13] । अनयोर्नो णत्वं[14] न भवति ॥ णस्य च[15] नत्वं स्यात् । एवमन्यदपि[16] ॥

## स्वराणां स्वराः प्रायोपभ्रंशे ॥ ३२९ ॥

अपभ्रंशे स्वराणां स्थाने प्रायः स्वरा भवन्ति ॥ कच्चु । काच्च ॥ वेण । वीण[17] ॥ बाँह । बाहा । बाहु ॥ पट्ठि । पिट्ठि । पुट्ठि ॥ तणु । तिणु । तृणु ॥ सुकिदु । सुकिओ[18] । सुकृदु ॥ किन्नओ । किलिन्नओ ॥ लिह । लीह । लेह ॥ गउरि । गोरि ॥ प्रायोग्रहणाद्यस्यापभ्रंशे विशेषो वक्ष्यते[19] तस्यापि क्वचित्प्राकृतवत् शौरसेनीवच्च कार्यं भवति ॥

---

१ B °यप्पकु°. २ B °नग्गपइबि°. ३ P थळं. ४ B लुद्धं. ५ B °तस्य. ६ B वसुधा. ७ B उच्छलंति. ८ A °क्का । दामोतरो. ९ B दामोदरो. १० B भगवती. ११ A नियोचितं. १२ A °क्तनं पै°. १३ B मक्करो. १४ B °त्वं च न. १५ B तु. १६ B °पि ॥ अथ अपभ्रंशभाषा ॥ स्वरा°. १७ A वीणा. १८ A सुकिउ. १९ B वक्ष्यति.

## स्यादौ दीर्घ-ह्रस्वौ ॥ ३३० ॥

अपभ्रंशे नाम्नोंत्यस्वरस्य दीर्घह्रस्वौ स्यादौ प्रायो भवतः ॥ सौ ॥

ढोल्ला सामला धण चम्पा-वण्णी ।
ण[1]ाइ सुवण्ण-रेह कस-वट्टइ दिण्णी ॥

आमन्त्र्ये ।

ढोल्ला मइं[2] तुहुं वारिया[3] मा कुरु[4] दीहा माणु ।
निद्दए गमिही रत्तडी दडवड होइ विहाणु ॥

स्त्रियाम् ॥

बिट्टीए मइ भणिय तुहुं[5] मा करु वंकी[6] दिट्ठि ।
पुत्ति सकण्णी[7] भल्लि जिवँ[8] मारइ हिअइ[9] पइट्ठि ॥

जसि ॥

एइ ति घोडा एह थलि एइ ति निसिआ खग्ग ।
एत्थु[10] मुणीसिम जाणीअइ[11] जो नवि वालइ वग्ग ॥

एवं विभक्त्यन्तरेष्वप्युदाहार्यम् ॥

## स्यमोरस्योत् ॥ ३३१ ॥

अपभ्रंशे अकारस्य स्यमोः परयोः उकारो भवति ॥

दहमुहु[12] भुवण-भयंकरु तोसिअ-संकरु णिग्गउ रहे[13]-वरि चडिअउ ।
चउमुहु[12] छंमुहु[12] झाइवि एक्कहिं लाइवि णावइ दइवें घडिअउ ॥

## सौ पुंस्योद्वा ॥ ३३२ ॥

अपभ्रंशे पुल्लिङ्गे वर्तमानस्य नाम्नोकारस्य सौ परे ओकारो[14] वा भवति ॥

अगलिअ-नेह-निवट्टाहं जोअण-लक्खुवि जाउ[15] ।
वरिस-सएणवि जो मिलइ सहि सोक्खहं सो ठाउ[16] ॥

पुंसीति किम् ।

---

१ P नाइ. २ P मइँ. B मइ. ३ P B वारिओ. ४ B करु. ५ P तुहु. B तुहं. ६ B वंकिदिट्ठी. ७ B °कण्णिभ°. ८ A जिम्व. B जिम. ९ A हिअय. B हीअइ. १० B एत्थ. ११ P जाणिअइ. १२ B °ह. १३ B रहेवडिं च°. १४ A B °रो भ°. १५ A जाओ. १६ B ठ्ठाउ. A ठाओ.

अङ्गहिं अङ्गु न मिलिउ[1] हलि[2] अहरें[3] अहरु न पत्तु ।
पिअ जोअन्तिहे मुह-कमलु एम्वइ सुरउ समत्तु ॥

## एट्टि ॥ ३३३ ॥

अपभ्रंशे अकारस्य टायामेकारो भवति ॥
जे महु दिण्णा[4] दिअहडा दइएं[5] पवसन्तेण ।
ताण[6] गणन्तिए[7] अङ्गुलिउ जज्जरिआउ नहेण ॥

## ङिनेच्च ॥ ३३४ ॥

अपभ्रंशे अकारस्य ङिना सह इकार एकारश्च भवतः[8] ॥
सायरु[9] उप्परि[10] तणु धरइ तलि घल्लइ रयणाइं ।
सामि सुभिच्चुवि परिहरइ सम्माणेइ खलाइं ॥
तले घल्लइ ॥

## भिस्येद्वा ॥ ३३५ ॥

अपभ्रंशे अकारस्य भिसि परे एकारो[11] वा भवति ॥
गुणहिं[12] न संपइ[13] कित्ति पर[14] फल लिहिआ भुञ्जन्ति ।
केसरि न लहइ बोड्डिअवि गय लक्खेहिं घेप्पन्ति ॥

## ङसेर्हे-हू[15] ॥ ३३६ ॥

अस्येति पञ्चम्यन्तं विपरिणम्यते । अपभ्रंशे अकारात्परस्य ङसेर्हे हु[16] इत्यादेशौ[17] भवतः ॥
वच्छहे गृण्हइ[18] फलइं जणु कडु-पल्लव वज्जेइ ॥
तोवि महद्दुमु सुअणु जिवँ[19] ते उच्छङ्गि[20] धरेइं ॥
वच्छहु[21] गृण्हइ[18] ॥

१ P मिलिअउ. २ A हले. ३ B अहरे. ४ A दिन्ना. ५ A B दइए. ६ B ताणं. ७ A गणंतिअ. ८ A भवति. ९ B सायर. १० B उपरि. ११ B °रो भ°. १२ B गुणेहिं. १३ P संपय. १४ B परं. १५ A °र्हेहूः. १६ A °र्हेंहू. १७ B °शौ वा भ°. १८ A गृन्हइ. १९ A B जिम्व. २० P उच्छङ्गे. २१ B वच्छहू.

